# अमर भारती

# (AMARA BHARATHI)

★

ग्रन्थकर्ता :

जोश्युल सूर्यनारायणमूर्तिः

★

भारती सदनम्

अवनिगड्ड, कृष्णा जिल्ला

(आन्ध्रप्रदेशः)

Price. Rs. 10/-

प्रथममुद्रण
1983

# विषयानुक्रमणिका



पञ्चाक्षरी प्रेस्,
ब्राडीपेट, गुण्टूरु.

# FOREWORD

If there is a language that can transcendentally delve into the soul of man, beyond his thoughts, feelings and actions, it is Sanskrit—the well-reformed (samyak kritam) source of almost all civilised languages.

The ancient Sanskrit writers realised that the human existence, which is a product of the mixture of good and evil, has to make the most of its opportunity of sublimating its beastly instinct into its divine element; and that this sublimation is best effected by the light of self-knowledge which dispels the darkness of the nescience that makes man superimpose the ills of his mortal body and mind on his immortal soul.

The author of this slim but sublime volume, Josyula Suryanarayana murty, may be said to have succeeded in bringing to the reader's notice all the eternal verities which Sanskrit literature has all along been focusing its attention on.

The first article, which takes its title from Valmiki's own words, highlights the qualities of chastity, sagacity veracity, tact and self-abnegation that make Sita the worthy heroine of the worthy hero, Rama, in such a way as to make 'Raamaayanam' an equally meaningful 'Seeta-ayanam'.

The second essay, which calls Rama a 'Purushottama' adequately lends itself to the needed dual interpretation of that significant term : Rama is at once the embodiment of human perfection ('noble man' as the material meaning of the word suggests) and the quintessence of the supra-cosmic spirit which, according to the Gita, is the 'Purushottamah' that is above and beyond the mutable 'Kshara' and the immutable 'Akshara'.

'Saundarya-laharee'of Sankaracharya is appropriately interpreted as the great treasure that the saint has handed down to us, through the depiction of the primal Shakti, who supramentally dwells in the body-mind-heart-soul-unifying thousand-petalled lotus, which is reached by the devotee through the Sushumnaa nerve-channel that passes along the sub-conscient, earth-based'Moolaadhaara' the sensual centre of the fire-bearing 'Swaadhishthaana', the vital source of the watery 'Manipoora', the air-filled lung-power of the 'Anaahata', the space-time continuum of the speech-generating 'Visuddha' and the all-knowing mental realm of 'Aajnaa'.

'Dharma', the unique untranslatable Sanskrit word, is the keynote of Kalidasa's literary creation: how his main characters live up to it is well pinpointed by this author.

The fourth Act of Kalidasa's 'Abhijnaana Saakuntalam' is justly popular. But Mr Josyula points out that the Fifth Act portrays the crucial second encounter between Sakuntala and Dushyanta, which varies from their first sensual one, and which leads up to their final self-purifying re-union, through its enaction of their separation caused by Sakuntala's losing the ring that was to serve as the 'Abhijnaana.

Normally one reads Kalidasa's 'Megha-dootam' [cloud-messenger] for its 'romantic' appeal . Skilfully the present author brings out its metaphysical nuances and subtleties

The next essay presents the 'suggestive' aspects of the just-mentioned poetic composition---from the stand-point of the poetician's theory of 'Dhvani' .

All great poetry is ever progressive. How Bhavabhuti remains eternally modern is demonstrated in the eighth piece.

Bhasa's "Avimaarakam" is dealt with in the next item.

The allegorical play "Prabodha Chandrodayam", on Advaita epistemology, is explained in the tenth article.

Then comes a critique of Viswanatha Satyanarayana's two Sanskrit plays, "Gupta Paasupatam" and "Amrita-Sarmishtham."

That Lord Krishna is God Himself is the next theme.

Finally appears a playlet by the author himself, which shows up the 'Delusion' caused by Modernity and which finds a happy ending in the couple's appreciation of undying Tradition.

All in all, this is a valuable addition to the sempiternal Sanskrit literature.

Rajahmundry
21-2-1983

**R. M. CHALLA**

गुरुभ्यो नमः

कोम्पेल्लान्वय वाराशि शारदेन्दुर्गुरुर्मम ।
पायान्मां ज्ञानदानेन रामशास्त्री महाबुधः ॥

चिलुकूर्यन्वयदुग्धाब्धिचन्द्रं पापयशास्त्रिणम् ।
नौमि विद्याविवेकश्री सिद्धये स्वान्तशुद्धये ॥

शिष्यमुद्धर्तुमुद्युक्तं वीरभद्रं गुरुं सदा ।
चित्ते सम्भावयन् वन्दे लक्ष्मीगणपतिप्रियम् ॥

तर्कशास्त्र प्रवणं मे गुरुं तं वत्सलं मयि ।
मार्कण्डेयाख्य विद्वांसं वन्दे वेदान्तवेदिनम् ॥

## ॥ कृतज्ञताञ्जलिः ॥

एतद् ग्रन्थस्थ पञ्चविषयान् (3, 7, 11, 13, 14) विहा अन्ये सर्वे विषयाः मया तदा तदा 'आकाशवाणी-विजयवाड' केन्द्र "दमरवाणी"विभागतः प्रसङ्ग (भाषण) रूपेण भाषिताः, प्रसारिता अभूवन्। आकाशवाणी (विजयवाड) केन्द्राधिकारिणां सौजन संस्मरन् तेभ्यः, विशिष्य एतत्कारयितुः "उषश्री" महोदयस्य च मे कृतज्ञताञ्जलिं प्रददामि। द्रव्यसाहाय्यकृत् तिरुमल - तिरुपति देवस्थानं च प्रणमामि, येन 3380 रूप्यकाणि दत्तानि।

देशविदेश प्रसिद्धः श्रीयुतः आर॰एम्॰चल्ला (R.M.Challa महोदयाः ये मत्प्रार्थना मङ्गीकृत्य कृपापूर्वक पूर्ववचन (Foreword माशीर्वचनतुल्यं ददुस्तेभ्यश्चेयं मे कृतज्ञतापूर्विका नतिः।

आङ्लहिन्दीभाषाकोविदं, साहित्यरत्नं, मे मित्रवर्यं श्रीयुतं प्रयाग सत्यनारायणमूर्तिमहोदयं, यस्य सर्वविधसाहाय्येन विना ग्रन्थ स्यास्य मुद्रणमेव नाऽभविष्यत्, कथमहं विस्मराम्यस्मिन् जन्मनि अनारतं तदभ्युदयकामो भवामि।

पञ्चाक्षरीमुद्रणालय मभिनन्दामि च प्रीतिपूर्वकम्।

विनति :— मुद्रणविषयिकाः केचन दोषास्तत्र तत्र दृश्यन्ते तत्त्वादिशब्देषु आवश्यकानि द्वित्वादीनि सम्यगक्षर बद्धानि नाऽभवन्। एव मेवानुस्वार मकार सम्बन्धिनश्च सहृदय पाठकाना मस्मिन् विषये सानुभूति सहकारावभ्यर्थ्येते।

—जो॰सू॰मूर्तिः।

# अमर भारती

## आमुखम्

### संस्कृताध्ययनम्

आदौ संस्कृताध्ययनप्रयोजनानि परिशीलयामः। अस्माकं संस्कृतेः सम्प्रदायस्य च परिरक्षण मावश्यकम्। अद्यास्माभिः प्राचीन भारतदेशचरितं वेदवाङ्मयरहस्यं, स्मृतिपुराणादीनां कीलकञ्च परदेशीयै र्बोधितान्यवगम्यन्ते। स्वतःसिद्ध सम्प्रदायपद्धत्यायै रस्मदीयै रेतान्युपर्युक्तानि श्रद्धयावगतानि तैर्विज्ञायते यत्पाश्चात्यै र्यैरेतानि अपमार्गं प्रापितानीति तदपिविदितपूर्वमेवास्माभि श्चिरादेव। तथापि सत्येमार्गे अस्मदितिहासस्य पुराणादि वाङ्मय रहस्यस्य चाविरल प्रचुरण प्रचारावकाशो न दृश्यते। हेतुश्चास्य– आदितः संस्कृतस्य सक्रमाध्ययनाभावः। परविषयक वाङ्मय विज्ञानशास्त्रादीनां परिचयानन्तरं तत्परिज्ञान परिचिति पद्धत्यैव एतेषां परिशीलनं चात्र कारणतया सम्भावनीयमेव।

(1) अतः संस्कृताध्ययनस्य प्राथमिकं प्रयोजनं उपर्युक्तानां सदवगाहन मिति मे मतिः।

(2) अद्य भारते देशे प्रान्तीयभाषाणा मभिवृद्धि माकांक्षता मस्माकं सर्वेषामपि भिन्नभिन्न प्रान्तवासिनां तत्साधनाय प्रथमं संस्कृता ध्ययन मावश्यकम् । अस्माकं सर्वा अपि देशीया भाषा संस्कृते-नोतप्रोततया वर्तन्त इति यदि प्रथमतो वयं जानीमः तर्हि तदभिवृद्धौ स्वाभ्युदयं साधयिष्यामः इत्यत्र नास्ति संशयः । संस्कृतभाषां प्रति परभाषेति बुद्धि र्न कस्यचिदपि प्रान्तीय भाषाभाषिणो विद्यते । वस्तुतः संस्कृतभाषा न कस्यापि भारतीय प्रान्तीयस्य जनस्य मातृ भाषा बभूव । न भवति । न च भविष्यति । किन्तु सर्वासा मस्माकं मातृभाषाणामियं देववाणी मातृभाषेत्यत्र न विप्रतिपत्तिः । अत्र न मया जन्य जनकभाव उद्दिश्यते । यस्याः कस्याश्चिदपि देश्याया स्तस्याः स्वयं प्राभवं स्वीय मैतिह्य च न शक्यते विज्ञेन केनाप्याधुनिके काले ।

(3) सम्पूर्णतः संस्कृतपदजालमपहाय व्यवहर्तुं न कस्यापि प्रान्तीयस्य स्वीय मातृभाषा भाषणमपि साध्यं भवतीति सर्वविदित मेतत् । सुशब्दापशब्दविवेक सम्पादनं तु न संस्कृत विज्ञानेन विना सम्भवतीति सत्यमेतत् । अपशब्दानुच्चारणं सुशब्दप्रयोग वैशिष्ट्यं चावश्यक मेव ।

(4 संस्कृतभाषाया मनन्त शास्त्रभाण्डारोऽस्ति । विज्ञानमये आधुनिके प्रपञ्चे मौलिकं भारतीय प्राचीन विज्ञान मवगन्तु माधुनिको भारतीयः प्रपञ्चविज्ञानेनास्मद्विज्ञानस्य समन्वयं कृत्वा परिशीलितुं च परिज्ञातसंस्कृतो भवेदिति निर्विवादोय विवेकः ।

यत्किमप्यस्माकं शास्त्रं स्वस्यपरिशीलन पर्यवसानं परमात्म-दर्शनमेवेति परमनिष्कृष्टेन सिद्धान्तेन गाढप्रज्ञामयीं चर्चां चकार ।

## अध्ययन विधानम्

प्राथमिकासून्नतासुच पाठशालासु भाषाध्ययनस्य प्रामुख्यं विसृज्य शास्त्राध्ययनस्यैव प्राथम्यं प्राधान्यं च प्रवर्तयितव्यमिति केषांचन शास्त्रज्ञानां विद्याधिकारानामद्य मत मवगम्यते । बहुभाषा-ध्ययनं कष्टतर मिति केषा च नाशयः । अनिवार्ये पठनविषयतया मातृभाषाया आंग्लभाषायाश्च निर्बन्धत्वं विद्यत एव । अपितु राज-भाषाया अथवा राज्यभाषाया हिन्द्या अपि पठनमनिवार्यमेव । तत कथमयं भारो वहनाय इति प्रश्नः । उपर्युक्तानिवार्यत्रयस्योपरि संस्कृ-तस्य अर्थात् मृतभाषायाः कथमध्ययनं क्रियते ? किमर्थं वा तादृशः क्लेशः ? इति केचिद्विज्ञानिन उद्घाटयन्ति । न ते जानन्ति संस्कृत-स्यामृतत्वं तस्यानिवार्यत्वं च । "मृतभाषे"ति तां संस्कृतभाषायामेव वदन्ति खलु । मृता सा कथं भाष्यते ? (इयंतु चमत्कृतिरेव)

सत्यामपीदृश्यां भावनायां प्राथमिक स्थिते रारभ्य विश्वविद्या लय विद्यापर्यन्तं संस्कृताध्ययनं क्रियत एव । किन्तु कथं तन्निर्वाह्यत इत्ययमत्र परिशीलनांशः ।

याथार्थ्ये परिचिन्तिते इदमवगम्यते यद् भारतेऽस्मिन्नद्य विद्या प्रमाणानामेव पतनोन्मुखत्वं दरीदृश्यत इति । किमुत संस्कृताध्यय-नस्य स्थितिः, यस्यां निष्ठैव नास्त्यलत्वारम्भाधिरेष्वपि सर्वेषु ?

उत्तमफलितानां मपरिदृश्यमाणानां सतां नूतनानां पद्धतीना माश्रयण-मावश्यकमिति केचन मन्यन्ते । तत्रापि नोतमा फलप्राप्तिः परिदृश्यते वस्तुतस्तु आधुनिका संस्कृताध्ययन पद्धति र्नूतनैव । तस्या वैफल्ये पुनर्नूतननूतनत्वान्वेषणं क्रियते । नतु पौरातन्ये मार्गे यो लोप स्तन्या न्वेषणं तन्निवारण प्रयत्नश्च ।

आंग्लेयविद्यार्थिनां केषांचित् संस्कृताध्ययनाय यो मार्गः, यश्च भारतीयानामयुक्त अनुपयुक्तश्च स एव समाश्रित अस्मिन् देशे अस्याः शताब्दे रारम्भे । स एवाद्यापि निर्वाह्यते विज्ञ रस्यानुपयुक्ति वेतृभिः । किन्तु न सम्यक परिशोधनं समालोचनं वा क्रियते प्राचीन भारतीय पठन पाठन विधानस्य ।

पुरा अस्माक मान्ध्रदेशे बाल्यादारभ्य संस्कृताध्यापन मवर्तत । बाल्ये एव संस्कृताध्यापनस्य समुचितत्वं ज्ञायते । अर्थपरिज्ञान दृष्टिं विना उच्चारणकण्ठस्थीकरण साधुत्वसाधन मात्र कार्यं सर्वेषा मध्ययना ध्वनीना मुच्चारण सौकर्य साधनायोत्तमोपकरणं संस्कृताध्ययनम् । क्रमशः वयःपरिमितिं विद्यार्थिनो विज्ञानपरिमितिं चानुसृत्याध्यापन-पद्धते र्विभिन्नत्वं वर्तत एव । अमर सिंहीय नामलिङ्गानुशासनस्य शब्दमञ्जर्याश्च कण्ठस्थीकरणेन भाविनि काले विद्यार्थिना तदुपयोगः क्रमशः प्राप्स्यते सुष्टु । सच विज्ञो भविष्यति ।

## प्राचीनताः, बहुप्रयोजनसाधनता च

बाल्ये यस्य कस्यापि परिशीलनदृष्ट्या साकं धारणाशक्तिश्च बुद्धेः समृद्धा वर्तते । तस्मिन्नेवावसरे वेदाध्ययन मार्गे विद्यार्थी

सुलभतया (न तु प्रत्येकदृष्ट्या) संस्कृतपरिचयं प्राप्नोति अश्रमेण। सुष्टूच्चारणं सम्यगर्थावबोधं ददाति अतस्तत् प्रथमं साधनीयम्। "दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुस्सैव शंसती"ति आचार्यदण्डिनो वाक्य मनुसृत्य सम्यक प्रयोग परायणा वयं भवेम।

1 संस्कृताध्ययनेन आस्तिकभावो वर्धते। न च स दोषः प्रमाद कारी वा। हेतुविचारेण बुद्धिश्चास्माद्विकसति। न चात्र मौढ्य मस्ति।

2 अनेन सात्त्विक धार्मिकता वर्धते। इयं चारोग्यकारिण्येव सङ्घस्य व्यक्ते श्च।

3 अस्माच्छीलसम्पद्विवृद्धिः परिदृश्यते।

4 निघण्टोः कण्ठस्थीकरण सौकर्यं संस्कृतभाषाया मेव दृश्यते यद् भाविनि काले अत्यन्तोपयोगि भविष्यति।

5 संस्कृत सम्बन्धिनी इयं प्राथमिकी विद्या बालानां मातापितृभ्या मेव दातुं युक्ता च भवति। न चैतावत अध्ययनस्य पाठ-शालागमन मावश्यकम्।

6 मुख्यतया यदि वय मस्मद्बालिकानां संस्कृत परिचयं कुर्मः तदा वयं संस्कृतस्य स्वधर्मस्य स्वसंस्कृतेश्च रक्षां कुर्म एव। कथमिति चेत्—ता मातरो भूत्वा स्वस्यापत्यस्य बोधनपरा भवेयुः। शिशुसंवर्धनञ्च भारतीयता संरक्षणरूपतया सहजमेव भविष्यति।

7 बाल्ये अस्यारोपो न भाषारूपो भवति, अपितु सम्प्रदाय-रक्षणरूपो बीजावाप एवेति विज्ञेयम् ।

"आचार्यात्पादमादत्ते पादं शिष्यः स्वमेधया ।
पादं सब्रह्मचारिभ्यः पादं कालक्रमेण च"॥

इत्यादिन्यायेन न वयमेव सर्वस्यापि विज्ञानस्य बोधकाः साधका वा इति मन्तव्यम् ।

8 एत दध्यापनार्थं प्रभुत्वस्य अथवा इतरेषां साहाय्यं नाभ्यर्थयेत् । स्वयं समृद्धसाधकत्वं चास्मिन्विषये प्राप्तव्य मिति ज्ञातव्यम् । यदि वय मत्रापेक्षापरा भवेम जात्याः सम्प्रदाय क्षेण्यस्य च सम्भवस्ते न सुदूरं भवतीति यथार्थ मेतत् ।

9 क्रमशः पाठ्य ग्रन्थानां निर्णये श्रद्धा प्रदातव्या । शास्त्रीयाणां विषयाणां भाषाध्ययनसमये न प्रामुख्यं दातव्यम् । साहित्यस्यैवप्रधानता परिरक्षणीया । भाषावगमन परिज्ञानानन्तरं विद्यार्थी सांकेतिकानां पदाना मवगमनमात्र परिश्रमेण शास्त्र परिज्ञानपरो भविष्यतीत्यत्र नास्ति संशयः ।

10 अस्माकं साहित्य माध्यात्मिक विद्यया सम्मिलित मेवेत्येतदवगन्तव्यम् । आचार्य शङ्कर भगवत्पाद कृतिषु यावती वैदिकी आध्यात्मिकी च विद्या वर्तते तावत्येव साहित्यस्यापि समृद्धिरिति विशेष एषः । इय मस्मद्वाङ्मयस्य विशिष्टता अन्य विषय जन्यकृतिभ्यः तथैव कालिदासादीनां महाकवीनां महाकाव्येषु साहित्य भाण्डारेण सह आध्यात्मिक विद्यानु-

गतिश्च सम्प्रदायवद्धैव दृश्यते । अतः प्रथमतो महाकवि कृतिभिरेव परिचयः कर्तव्यः योऽनुस्यूततया वर्ततेऽस्मद्देशे ।

अस्मत्संस्कृताध्ययन पद्धत्यां नान्यतो दर्शनीयो विशेषः संदृश्यते यदादावेवाध्ययनं कालिदास रघुवंशकाव्यं स्वीकृत्यैवारभ्यते। तथा न आंग्ले "शेक्स्पियर्" महोदयकृतिं स्वीकृत्य क्रियते ।

संस्कृतभाषाया मादिकवि वाल्मीकिरपि बालाना मभिगम्य एवेत्येष विशेषो विशिष्यालोचनीयः । अत एव संस्कृताध्यापने पूर्वेषां वाल्मीकि कालिदासादीनामेव मधुर मधुमय फणितिभि र्विद्यार्थिनां सुपरिचितं कारयित्वा भारतीयात्मनो धर्मस्य च परिरक्षणे यदि वयं परतन्त्रा भवाम. तदा लोककल्याणं संस्कृतप्रयोजनं च साधयितुं समर्था भवामः ।

यदि विद्यार्थी संस्कृत परिज्ञानवान भवेदादौ ततस्ततस्तस्या-धुनिकाध्ययने भाविनि जीवने च, वैद्यवृत्तौ, न्यायवादित्वे निर्माणादि (इंजीनीयर) कौशलेच, तत्तच्छास्त्रेष्वस्माकं ऋषीणामपि भावजातं ज्ञातुं तदनुगुणं स्वीयवृत्ते रुपयोगं प्राप्तुं वा शक्नोतीत्यत्र न संशयो विद्यते ।

केवलं संस्कृतशास्त्राध्ययन मात्र परतैनैव नात्र विद्यायाः परिसमाप्ति र्भवितव्येति सर्वेपि जानन्ति। किन्तु न परित्यक्तव्यं संस्कृताध्ययनमिति च निर्णेतव्यम् । संस्कृताध्ययनं नाम जीवने भोजन भाजनादिवत् वर्तितव्यं न च क्लेशसाध्यं भवितव्य मिति मे मतिः ।

अनेक विद्वज्जनमण्डितेऽस्मिन् भरतखण्डे अद्यापि संस्कृता-ध्ययनाध्यापनादिकं निर्वर्त्यते। आकाशवाणी वार्ताप्रसारेषु च देववाणी स्वीयं समुचितं स्थानमवापेति एतदभिनन्दनीयम्। तथापि सर्वेषामपि भारतीयानां (सन्तु नाम ते भिन्न भिन्न मार्गानुसारिणः) परस्परं सौन्दर्याभिवृद्ध्यर्थं सहकार सम्पत्यवाप्त्यर्थं च अस्याः संस्कृत भाषाया इतोधिकः प्रचारः न कस्यापि विप्रतिपत्तिं करोतु। प्रभुताया एव सहकृति रत्नास्माकं कृतित्वं प्रदास्यतीत्येतदयथार्थम्। प्रजानामेवेयं सम्पत्तिः प्रजास्त्वेवास्याः समादरः सम्प्राप्यः। जीवनोपयोगिनीं यामपि कां विद्यामालभन्तु विद्यार्थिनः। न तावता ज्ञानप्रसाधनभूतामात्मीयामेतां भाषां त्यजेदितीयं विनतिः।

श्री रामाय नमः

श्री सिद्धि लक्ष्मी गणपतयेनमः

# अमर भारती

## सीताया श्चरितं महत्

—X—

सत्यमेतत् पुरा अधुना च प्रत्यक्षमेव यद् आदिकाव्यं श्रीमद्रामायणं सर्वकाव्य प्रपञ्चस्य मार्गदर्शक मिति। अत एव भोज-राजेनोक्त "मधुमयफणितीनां मार्गदर्शी महर्षि रिति। तस्य काव्यस्य रामायणमिति नाम यावदुचितं तावदेव "सीतायन" मिति च तथैव पौलस्त्यवध मित्यपि कथ्यते।यथोक्त —

काव्यं रामायणं कृत्स्नं सीताया श्चरितं महत्।
पौलस्त्यवध मित्येव चकार चरितव्रतः॥ इति

जनकेन कन्यादानसमये कन्यादातृ सामान्योक्तिवद्यदुक्त राममुद्दिश्य—

इयं सीता ममसुता सहधर्मचरी तव।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना॥

इत्यस्मिन् सीतारामदाम्पत्य रहस्य सर्वस्वं निक्षितमित्यवगम्यते। यद्यपि रामोविग्रहवान् धर्मः सीता सहधर्माचरण मार्गेणैव तादृश मौन्नत्य मधिरूढ इति भासते।

सीता लोकतत्वज्ञा, धर्मतत्वज्ञा, आत्मविशेषज्ञा च। सैव सर्वस्त्रैणशिरोमणिः। लोककल्याणार्थं स्वीकृतावतारं भगवन्तं श्रीरामं सीता केवलमनुसृता। क्रमेणानुव्रता बभूव। अत्रि पत्न्या अनसूयया पृष्टा सीता स्वीयपरिणय कथाकथनोपक्रम मित्थं चकार।

तस्य लाङ्गल हस्तस्य कृषतः क्षेत्रमण्डलम्।
अहं किलोत्थिता भित्वा जगतीं नृपतेस्सुता॥
स मां दृष्ट्वा नरपति र्मुष्टि विक्षेपतत्परः।
पांसु कुण्ठित सर्वाङ्गीं जनको विस्मितोऽभवत्॥
अवाप्तो विपुलामृद्धिं मा मवाप्य नराधिपः। इति

एभि स्सीता वचनै रवगम्यते— सीता स्वयं प्राप्ता लक्ष्मीः अनाद्यनन्ता प्रकृतिः, जगतीं भित्वोत्थिता लब्धा जनकेन। अन्ततो जगत्यामेव विलीना शाश्वता महाशक्तिरिति।

"शिवश्शक्त्या युक्तो यदि भवति शक्तः प्रभवितु" मित्यादि शङ्कर भगवत्पादवाक्यस्मरण समन्वयविज्ञानेन विज्ञैरवगम्यते जानकी स्पष्टः।

तादृशी लोकज्ञा सीता अनसूयायै कथयति स्ववृत्त संवृतं जनकवृत्तान्तं संक्षेपतः यः कविना महर्षिणा कथाकथन मार्गदर्शिना नेतः पूर्वमुक्तः, अत्र सीतामुखतः प्रकटितश्च।

पति संयोग सुलभं वयो दृष्ट्वा तु मे पिता ।
चिन्तामभ्यगमद्दीनो वित्तनाशादिवा धनः ॥
सदृशाच्चापकृष्टाच्च लोके कन्यापिता जनात् ।
प्रधर्षण मवाप्नोति शक्रेणापि समो भुवि ॥

इतीयं तस्या लोकज्ञता, कवेश्च समयोचित गाथारहस्य व्यक्तीकरण-कुशलता च । गम्भीरो राजर्षि जनकः कदापि नैतदकथयत् तथापि सीतयैतदवगतं भावितं च हृदयनिक्षिप्तं यावद्वात्सल्यवत्या मातृ तुल्यया अनसूयया पृष्टं । अत्रोन्मील्यते सीताहृदय कमलम् । यद्या-त्रानुभूयते कन्यापितृभिस्तदेव राजर्षिणा जनकेनापि अनुभूत मिति महर्षि रस्माकं ज्ञापयतीति चित्रं सहजं च लोकवृत्तं । कन्यापितुरिदं प्रधर्षण मनुभूतपूर्वं मनुभूयमान मनुभाव्यं चेत्यवगम्यते ।

वनगमनसमये राम मनुगन्तु मुद्युक्तां सीतां निवारयन् रामः वनवासक्लेशं विवृण्वन् बहुधा कथयति 'तस्माद्दुःखतरं वन" मिति पौनः पुन्येन । सीतायास्तु मनसि वनवासः पितृगृह वासतुल्य एव प्रतिभाति । वनेतु विशाला धरा सुन्दरा प्रकृतिश्च दृश्यते याभ्यां सीतायास्सम्बन्धः प्रकृतिसिद्धः । वस्तुतस्तु सीतैव प्रकृतिरिति रम्यं तत्वमेतत् । अत स्सा रामविरहासहत्वं व्यक्तीकरोति । नांगीकरोति रामः । अत्र सीताया वचनमाधुर्यगाम्भीर्य धैर्याणि मन्तव्यान्यनु-गन्तव्यानि च

… स्वकां नारीं सुवृत्तां हि पतिव्रतां ।
नाभिरोचयसे नेतुं त्वं च मां केन हेतुना?" इति पप्रच्छ
भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः ।
नेतु मर्हसि काकुत्स्थ! समान सुखदुःखिनीं ॥

इत्युक्त्वा यदिमां नेतुं नेच्छसि विषमग्निं जलं वाऽह मस्थास्ये इति स्वनिर्णय सा विशदयति । ततश्च

सा तमुत्तमसंविग्ना सीता विपुलवक्षसं ।
प्रणयाच्चाभिमानाच्च परिचिक्षेपराघवम् ॥

धीरा सा पुनः पृच्छति राघव मेवं—

किं हि कृत्वाविषण्णस्त्वं? कुतो वा भयमस्ति ते?
यत्परित्यक्तुकामस्त्वं मा मनन्यपरायणा ॥ मिति ।

स्त्री धर्म, पत्नी धर्म, पति धर्म विवरणानन्तर मपि पत्या वनगमना न्निराकृता सा—

"तेजो नास्ति परं रामे तपतीवदिवाकरे" इति
"किंत्वा मन्यत वैदेहः पिता मे मिथिलाधिपः

राम जामातरं प्राप्य स्त्रियं पुरुषविग्रह" मित्याशंक्य लोकोय मज्ञानादेव रामं वीरं वदति नेदं सत्यमिति रामवैशिष्ट्य मपाचकार । शैलूष इव मां परेभ्यो दातुमिच्छसीति वदन्त्या तया

प्रबोधितो रामः स्वधर्मं सीतास्वरूप चावगत्य वनं नेतु मङ्गीचकार। वनगमन विषये निराकृतां विसंज्ञामिव दुःखितां तां परिष्वज्य रामः सांत्वयित्वा—

> यत् सृष्टासि मया सार्थं वनवासाय मैथिलि।
> न विहातुं मया शक्या कीर्तिरात्मवता यथा॥

इत्युवाच। इद रहस्य मत्र व्यक्तीकृतं कविना यत् राम आत्मवान् कीर्तिकाम श्चेति। रामस्य कीर्तिश्शाश्वते त्यद्या प्यस्माकं प्रत्यक्ष मेव। कथं सा कीर्ति स्सम्प्राप्ता रामेण धर्मात्मना? सीतामूलत एवेति न संशयः। अर्थात् रामस्य कीर्ति स्सीतैवेति निश्चितोर्थः। कीर्तिर्दीप्ति रित्यादयो भगवत्याः स्वरूपाः इत्यवगन्तव्यः सीतास्वरूपः। इयं वाल्मीके र्मधुमयी फणितिः।

अनेनात्र दम्पत्योः संलापेन दाम्पत्यपरमार्थेन सह सीता मुखतः सांत्वनेन, क्रोधभावेन, शोकेन च यद् व्याख्यातं तस्य सम्यगवगमनमावश्यकं। सीतायाः प्रतिवचनै स्तद्भर्ता रामो न क्रुद्धः नाप्यन्यथा भावित मनस्को वा बभूव। अपितु रामेण धर्मज्ञेनाधिगत सीताहृदयेनेत्थमुक्तं —

> सर्वथा सदृशं सीते मम स्वस्य कुलस्य च।
> व्यवसाय मनुक्रान्ता सीते त्व मति शोभनम्॥

राघव कुलस्नुषा सीता सर्वथा तदनुकूलतया बभाषेति जज्ञे रामः।

सैव तत्कीर्तिप्रवर्धका प्रवृत्तिरिति तस्य सन्तोषः। अयं सीताराम-सम्बन्धः।

इत्थमेव सहधर्मचरी सीता धर्मनिर्णयविषये रामं विग्रहवद्धर्मं बोधयामास बहुधा बहुशश्च तत्र तत्र भाविनि कथाविस्तरे।

सीता रामेण सह वनवाससमयं त्रयोदश वर्षपर्यन्तं सुखं निनाय। न तया कोपि क्लेशः समनुभूत इत्यस्य वाल्मीकिः प्रमाणम्।

रामोलक्ष्मणमाह —

**यद्यत्फलं प्रार्थयते पुष्पं वा जनकात्मजा।**
**तत्तत्प्रदद्याद्वैदेह्या यत्रास्या रमते मनः॥** इति

अथच -**एकैकं पादपं गुल्मं लतां वा पुष्पशालिनीम्।**
**अदृष्टपूर्वं पश्यन्ती रामं पप्रच्छ माऽबला॥**
**रमणीयान् बहुमुखान् पादपान् कुसुमोत्करान्।**
**सीतावचन संरब्धः आनयामास लक्ष्मणः॥**
**विचित्रवालुकां नीलां हंस सारसनादितां।**
**रेमे जनकराजस्य सुता प्रेक्ष्य तदा नदीम्॥**

इत्यादिभि र्मधुरै र्वाल्मीकि वचोभि स्सीताया वनवास जीवनं सुखमय मिति ज्ञायते। ईदृशी वाल्मीकि रचनाप्रणाली कालिदासेनानुकृता—

**"हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्।**
**नामधेयानिपृच्छन्तौ वन्यानां मार्गशाखिनाम्"**

इत्यादि रचनासमये इति परिज्ञायते परिशीलनपद्धत्यां । एव मदीनदर्शना स्सीतारामलक्ष्मणाः वनवासं सुखमय मकुर्वन् । गङ्गादितरणसमये सीतादेव्याः पातिव्रत्य पुरस्कृतं भक्तितत्वं च व्यक्त भवति । यथा—

मध्यं तु समनुप्राप्य भागीरथ्या स्त्वनिन्दिता ।
वैदेही प्राञ्जलिर्भूत्वा तां नदीमिद मब्रवीत् ॥
पुत्रो दशरथस्यायं महाराजस्य धीमतः ।
निदेशं पारयत्वेमं गङ्गे त्वदभिरक्षितः ॥
सा त्वां देवि नमस्यामि प्रशंसामिच शोभने ।
प्राप्तराज्ये नरव्याघ्रे शिवेन पुनरागते ॥
गवां शतसहस्राणि वस्त्राण्यन्नञ्च पेशलम् ।
ब्राह्मणेभ्यः प्रदास्यामि तव प्रिय चिकीर्षया ॥

इत्येतै र्वचनै राधुनिकाना मुत्तमपुरंध्रीणा मपि देवताभिवन्दन प्रार्थनादिभि र्दुःखनिरासन प्रयत्न अनुस्यूतो भारतीयः सम्प्रदाय इत्यवगम्यते। इत्थमेव कालिन्दीतरण श्यामवृक्ष दर्शनादिसमयेष्वपि सीताया वन्दन प्रार्थनादिकं कृतं शुभाशसन बुद्ध्या प्रयाणसमये ।

एकदा वनवास समये मैथिली क्षात्र धर्मस्य मुनिधर्मस्य च सूक्ष्मपरिज्ञानेन भासमाना सती, मुनिक्लेश निवाणार्थं राक्षसै र्बद्धविरोधस्य पते स्तद्द्रोह मकारणवरं समर्थयति । "विना वैरंच

रौद्रता।" रामेणारभ्यत इत्युक्त्वा सीता ततो रामं निवर्तयितु कामा बभूव। सन्दर्भेस्मिन् यदुपन्यस्तं तया तेन तस्या वैदुष्यं जानकीत्वं च व्यज्येते।

यथा—त्रीण्येव व्यसनान्यत्र कामजानि भवन्त्युत।
मिथ्यावाक्यं परमकं तस्माद्गुरुतरे उभे॥
परदाराभिगमनं विना वैरञ्च रौद्रता।
मिथ्यावाक्यं न ते भूतं न भविष्यति राघव॥
कुतोभिलषणं स्त्रीणां परेषां धर्मनाशनम्।
तव नास्ति मनुष्येन्द्र न चाभूत्ते कदाचन॥
मनस्यपि तथा राम, न चैतद्विद्यते क्वचित्।
स्वदारनिरतस्त्वं च नित्यमेव नृपात्मज॥
तृतीयं यदिदं रौद्रं परप्राणाभि हिंसनम्।
निर्वैरं क्रियते मोहात् तच्च ते समुपस्थितम्॥

इत्यादि शास्त्रीयविषय प्रसक्ते रनन्तरं मुनेरेकस्य कथा मकथयत्, यः शस्त्र सम्पर्केण तपसि निश्चयं त्यक्त्वा स्वां बुद्धिं रौद्रीं चकार। प्रमत्तस्सन् अधर्म कर्शित स्सः ततो नरकं जगामेति। सन्निवेशोऽयं सीतायाः पौराणिक कथापरिज्ञानं तेनोत्पन्न युक्तायुक्त विवेचनं च ज्ञापयति। भाषणेऽस्मिन् रामं प्रति य मभिप्राय मभिव्यञ्जयत् सोपि तस्याः सुनिशितां मतिं व्यक्तीकरोति। यत्र कुत्रापि दोषसूचना-समये तत्र ये गुणास्सन्ति तेषामपि प्रकटनं वक्तुर्नैपुण्यं कार्यसाधन

कुशलतां च व्यञ्जयति । इयं विशेषता सीताया मनोविज्ञान विशार-दत्वं द्योतयति । अपि च रामेणैकपत्नी व्रतशीलेन तद्विषयकं सर्वोत्तमं प्रमाणपत्रमलब्धं यतोऽवश्यं प्राशस्त्यं तदित्यहो वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणो ध्वनिविशेषः । सन्दर्भेऽस्मिन्नपि सा मर्यादां नातिक्रामति । अत एव "स्नेहाच्च बहुमानाच्च स्मारये त्वां न शिक्षये" इति "स्त्री चापलादेतदुदाहृतं मे धर्मं च वक्तुं तव कस्समर्थः" इति "यद्रोचते तत्कुर्विति च तस्या स्समुचिता वाक्य समाप्तिः । सीताया स्समयज्ञता विज्ञता च रामेणाभिनन्दिते । आश्रितवत्सलत्वा द्रामस्य सीतासूचितं नाचरण साध्य मभवत् । तादृशस्य रामस्य धर्मपत्नी तदर्हतामेवाप्नोति । तदेव रामेणोक्तं । यथा—

> मम स्नेहाच्च सौहार्दा दिदमुक्तं त्वयानघे ।
> परितुष्टोऽस्म्यहं सीते न ह्यनिष्टोऽनुशिष्यते ॥ इति

अनिष्टो नानुशिष्यत इत्यनेन सीताशासनं स्वस्य श्वः श्रेयस्कर मिति तेन विज्ञात मेव । अतएव —

> सदृशं चानुरूपं च कुलस्य तव चात्मनः ।
> सधर्मचारिणी मे त्वं प्राणेभ्योऽपि गरीयसी ॥

इत्युवाच । इदं खलु सधर्मचारिणीत्वं सीतायाः यदुक्तं तज्जनकेनादौ कन्यादानकाले । इदमेव चानुकारिणीयं दाम्पत्यभावे यावन्मानवता जीवति संसारे ।

स्वापहरण समये तदनन्तरं लङ्कायां च यद् रावण मुद्दिश्य सीता भाषित मस्ति तत्र तत्र सीता निर्भीका विराजते। स्वस्यापि सामर्थ्यं तया सम्पूर्णतया शश्वद्विज्ञातमेव। सा शोकेपि नात्मधैर्यं जहाति। सैव तस्या लौकिकी चालौकिकी चात्मज्ञता। महर्षि-र्वाल्मीकि र्विशिष्टां सृष्टिं कुर्वन् यां कवितासृष्टि मकरोत् तादृशी नान्यतो दृश्यते।

"न व्यपत्रपसे नीच कर्मणानेन रावण।
ज्ञात्वा विरहितां यन्मां चोरयित्वा पलायसे॥
विश्राव्य नामधेयं हि युद्धे नास्मि जिता त्वया।
ईदृशं गर्हितं कर्म कथं कृत्वा न लज्जसे॥
धिक् ते शौर्यं च सत्वं च ..." इत्यादिकेन,

लङ्कायां च—

यथा तव तथान्येषां दारा रक्ष्या निशाचर।
आत्मान मुपमां कृत्वा स्वेषु दारेषु रम्यताम्॥

इति निर्भीका च सीता रावण मुपदिदेश।

"इह सन्तो न वा सन्ति सतो वा नानुवर्तसे ?" इति पृच्छन्ती निपुणं निनिंद।

असन्देशात्तु रामस्य तपसश्चानुपालनात्।
न त्वां कुर्मि दशग्रीव भस्म भस्मार्ह तेजसा॥

इत्यादि सीता भाषितै र्महर्षिस्तस्या लोकोत्तर शक्तिमत्त्वं विवृणोति । निमित्तमात्र एव रामो रावण वधायेति ज्ञायते । रावणवशे स्थिता मप्यात्मानं सा तदधीनां न कदा प्यमनुत । अतएव रावणं प्रति सा—

अपनेष्यति मां भर्ता त्वत्त श्शीघ्रमरिन्दमः ।
असुरेभ्यः श्रियं दीप्तां विष्णु स्त्रिभिरिव क्रमैः ॥

इत्यादि वाक्यैः स्वस्यालक्ष्मीत्वं रामस्य विष्णुत्वं च व्यक्ती चकार । ईदृश्या नार्या मनसि रावणा दन्याद्वा भीतिः कुतोभवति ? सीतायाः स्वरूपं हनुमद्वाक्यैः कवि र्व्यञ्जयति । लङ्कादहनानन्तरं सीतापि दग्धेति शङ्कमानो हनुमान् पुनर्विचारणे इत्थं भावयति—

अथवा चारुसर्वाङ्गी रक्षिता स्वेन तेजसा ।
न नशिष्यति कल्याणी नाग्नि रग्नौ प्रवर्तते ॥
नहि धर्मात्मन स्तस्य भार्यामभित तेजसः ।
स्वचारित्राभि गुप्तां तां स्प्रष्टु मर्हति पावकः ॥
तपसा सत्यवाक्येन अनन्यत्वाच्च भर्तरि ।
अपि सा निर्दहे दग्निं न ता मग्निः प्रधक्ष्यति ॥

इत्यादिभि रग्निस्वरूपा सीतेत्यवगम्यते । स्वीयचरित्रशुद्ध्या पवित्रा सा अग्नेरपि पवित्रेति भावः । भाविकालीन मग्निपरीक्षणं तत्फलितं चात्र कविना व्यञ्जितं । सा च "शीतो भव हनूमतः" इति मन्त्र-

सदृश वाक्य रश्मिमयाचत । तदनुग्रहेणैव हनुमतोपि लांगूलं न दहति पावक इत्यस्या स्सामर्थ्यं सम्पन्नम् ।

"यश्शोकवह्निं जनकात्मजाया आदाय तेनैव ददाहलङ्का" मित्याद्याञ्जनेयस्तुतेरपीद मेव रहस्यमवगन्तव्यम् ।

सीतान्वेषण विशेषं वर्णयता महर्षिणा योगविद्योद्घाटनं कृत मिति भाव्यते । सीतान्वेषणं नाम योग विद्यया आत्मावगति रेव, नान्यत् । योगी हनूमान् एव मात्मनः अर्थात् परमात्मन अन्वेषणं चकारेति मतिः । ब्रह्मानुसन्धाने या महती पर्युपासना आवश्यकी सैवात्र प्रदर्शिता । अन्ते च सीता सन्दर्शन समये कपिवरः सीतां ददर्शेत्युक्तवता कविना या कविता ब्रह्मविद्यामयी सृष्टा तया सीता प्रकृति बुद्धिगम्या भासते । तद्भावयन्तु भावुकाः—

अभूतेनापवादेन कीर्तिं निपतितामिव ।
आम्नायाना मयोगेन विद्यां प्रशिथिलामिव ॥
वेदीमिव परामृष्टां शान्तामग्निशिखमिव ।
प्रज्ञामिव परिक्षीणां आशां प्रतिहतामिव ॥
पिनद्धां धूमजालेन शिखामिव विभावसोः ।
निश्वासबहुलां भीरुं भुजगेन्द्रवधूमिव ॥
तां स्मृती मिव सन्दिग्धा मृद्धिं निपतितामिव ।
दुःखेन बुबुधे सीतां हनुमाननलंकृतां ॥

संस्कारेण यथा हीनां वाच मर्थान्तरं गतां...

नैषा पश्यति राक्षस्यो नेमान् पुष्पधरद्रुमान् ।

एकस्थहृदयानूनं राम मेवानुपश्यति ॥

इत्यादिभिरलौकिकोपमानैः कालिदासादीनां मार्गदर्शी महर्षिः ।

रावणवधानन्तरं यदा रामस्य "जनवाद भयाद्राज्ञो बभूव हृदयं द्विधा" तदा कालान्तकयमोपमो भूत्वा सर्वेषा मप्रधृष्योऽभव द्रामचन्द्रः ।

सोऽपृच्छत् —

"कःपुमान् हि कुले जातः स्त्रियं परगृहोषिताम् ।

तेजस्वी पुनरादद्यात् सुहृल्लेखेन चेतसा ॥

रावणाङ्कपरिभ्रष्टां दृष्टां दुष्टेन चक्षुषा ।

कथं त्वां पुनरादद्यां कुलं व्यपदिशन् महत् ? इति

अकथयच्च —

तद्गच्छह्यभ्यनुज्ञाता यथेष्टं जनकात्मजे ॥ इति

इत्थं निरस्ता सा धीरा सती—

"यद्यहं गात्रसंस्पर्शं गतास्मि विविशा प्रभो ।

कामकारो न मे तत्र दैवं तत्रापराध्यति "

इति वक्तुं शशाक

पृथक् स्त्रीणां प्रचारेण जातिं तां परिशङ्कसे ॥

इत्युक्त्वा ततो गजेन्द्रहस्ताभिहतेव वल्लरी बाष्पपरिक्लिन्नं स्वमाननं प्रमार्जन्ती शनैर्गद्गदया वाचा भर्तार मिदमब्रवीत् ।

किं मामसदृशं वाक्यं ईदृशं श्रोत्रदारुणम् ।
रूक्षं श्रावयसे वीर प्राकृतः प्राकृतामिव ।। इति

सन्दर्भेस्मिन् रामवाक्यमिदं परिशीलनीयं यद्—

"प्राप्तचारित्र सन्देहा मम प्रतिमुखेस्थिता ।
दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढम् ।।

इत्यनेन रामस्यैवात्र नेत्र दोषो न सीताया इति परमार्थो व्यज्यते महर्षेः कविता वैभवेन । अग्निप्रवेशसमये च सीतया या पावकस्तुतिः कृता "सर्वतः पातु पावकः" इति सा मन्त्र सदृशी दृश्यते ।

जीवितस्यान्ते च

यथाहं राघवादन्यं मनसापि न चिन्तये ।
तथा मे माधवी देवी विवरं दातु मर्हति ।।

इत्यादिभिश्शपथै र्भूमामेव भूमिजा विवेश ।

तामासनगतां दृष्ट्वा प्रविशन्तीं रसातलम् ।
पुष्पवृष्टि रविच्छिन्ना दिव्या सीता मवाकिरत् ।।

इत्थ मिदं सीतायनम् । महर्षेश्च विशिष्टा स्त्री सृष्टिः ।

=)o(=

## २. श्रीरामः पुरुषोत्तमः

"आदिराजयशोबिम्ब मादर्शं प्राप्य वाङ्मयम् ।
तेषा मसन्निधानेऽपि न स्वयं पश्य नश्यति ॥"

इत्यालङ्कारिकाचार्य वचनानुशीलनेनेदं ज्ञायते यन्महर्षे वाल्मीके र्वाङ्मयं श्रीरामचन्द्र मादर्शं प्राप्य अद्यापि न नश्यतीति इतः परं च न नशिष्यतीति । महाकाव्यस्य निर्माणे तद्वस्तुनः ततो तन्नायकस्य प्राधान्य मित्थमस्तीत्यस्य परमोदाहरणतया श्रीमद्रामायणं वाल्मीकि कृतं दरीदृश्यते । अस्य काव्यस्य यदनौपम्यं काव्य जाते अद्यापि गम्यत इत्यस्यापि परमं कारण मिदमेव यदालङ्कारिकै रुक्तम् ।

रामायण कथानायकः श्रीरामचन्द्रः सार्वकालिकं सार्वदेशिकं च लोकोत्तर गुणवत्तरत्वं च धत्ते । अत एव रामस्य "अनुत्तम" इत्येतद्विचित्र विशेषणपदम् । यस्मादुत्तमो लोके नास्ति सोयं रामचन्द्रः स्वयं विग्रहवान् धर्मः यदवलम्बो न केवलं भरतखण्डस्यैव किन्तु सर्व भूमण्डलस्यापि । मानवस्य यः समग्रः स्वरूपः धर्मपरिपूर्ण स्तस्य राम एवावलम्बः । मानवतायां ये गुणाः सौभ्रात्व, सत्पुत्रत्व, सत्पतित्व, सन्मित्रत्व, सच्छत्रुत्वादयो वाञ्छनीया वर्तन्ते तेषां सर्वेषामपि निधानं श्रीरामचन्द्रः न कोऽपि दृशो मानव स्समग्रगुण-

सम्पन्न अन्यो वाङ्मये लोके च दृश्यत इत्येत न्निर्विवादं सत्यम् । "कोन्वस्मिन् साम्प्रतं लोके गुणवान् कश्चवीर्यवा" नित्यादि परिप्रश्नेन वाल्मीकिनोद्दिष्टः अव्ययः पुरुषपुङ्गव स्तस्य काव्ये कथाविस्तरे विस्तृतः परिदर्शित इत्ययं विशेषः ।

रामस्य सम्भाषण प्रवर्तनादिभिः यानि तद्बन्धुमिलमिलै स्साकं कृतानि, धर्मैकपरायणत्व मेव तस्य भावुकै रवगम्यते । यदशक्यमप्यस्मादृशै रनुकर्तुं, यथाकथञ्चित् यत्किञ्चिदपि अनुकर्तव्यमेव नित्यजीवनविधाने येन पुरुषत्व प्राप्तिर्लभ्यते, तेन च तदनन्तर पुरुषोत्तमप्राप्तियोगस्य यत्नः सुलभो भविष्यति । अत एव रामोऽस्माकं मानवाना मादर्शप्रायः यद्दर्शनेन यत्कथा श्रवणमननादिना च वय मस्मान् संस्कर्तु मुद्युक्ता भवेम ।

अनयैव दृष्ट्या रामकथा परिशीलनीया । ततश्च तस्यां भक्ति स्सञ्जायते । नेतरेण दृक्पथेन रामकथालापे लाभो भवतीति मन्ये । श्रीरामः कीदृशः ?

**रामस्सत्पुरुषो लोके सत्यः सत्यपरायणः ।**
**साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रियासह ॥**

सत्पुरुषो रामः न केवलं सत्यपरायण एव किन्तु सत्य एव स इत्येतदवगन्तव्यं । सत्याभिन्नत्वं नाम सत्ममेव दैवमिति । रामे यद्देवत्वं भाव्यते तस्य सत्यत्वावगत्या सत्याराधनपरमार्थोऽवगम्यते । तस्य च प्रामुख्यं मानव जीवने लोके लोकोत्तरत्वसिद्धिं ददातीति

विज्ञेयम्। अतएव श्रियासह धर्मः रामादेव विशेषेण निवृत्तः (सु खतः)। यदा यत्र च धर्मस्यनिर्वृतिर्भवति तदा तत्र लोकोयं सुखमय इत्यत्र नास्ति संशयः। अयमस्माकं प्राथमिक आदर्शो दर्शनीयः आचरणीयश्च श्वः श्रेयसे इतिनिश्चितोऽर्थः।

श्रीराम आत्मनो हृदयं व्यक्तीकरोति। यथा— "रामो द्विर्नाभिभाषते" इति कैकेय्यै। कैकेयी वांछित रामवनगमनं ज्ञात्वा राजा दशरथो विसंज्ञो बभूव। ततस्तदाज्ञाकारी रामः कैकेय्या अन्तःपुरमागतस्सन् तां पप्रच्छ -

"तत् ब्रूहि वचनं देवि राज्ञा यदभिकांक्षित" मिति। उवाच च "करिष्ये प्रतिजाने च रामोद्विर्नाभिभाषते" इति तदा— "तमार्जव समायुक्त मनार्या (कैकेयी) सत्यवादिन" उवाच रामं यद् तदिदं सुष्टु परिशील्य वयं रामस्य पुण्यचारित्रं सुपुत्रत्वं च जानीमः।

आर्जवसमायुक्त स्सत्यवादी रामः। कैकेयीत्वनार्या। आर्जवं नाम अवक्रत्वं तेन समायुक्त स्सत्यमादी च राम इत्यर्थः। कैकेयी वचनं किमितिचेत् —

यदि सत्यप्रतिज्ञं त्वं पितरं कर्तुमिच्छसि।
आत्मानं च नरश्रेष्ठ! मम वाक्यमिदं श्रुणु॥

सन्निदेशे पितुस्तिष्ठ! य थानेन प्रतिश्रुतम्।
एतत्कुरु नरेन्द्रस्य वचनं रघुनन्दन॥

सत्येन महता राम तारयस्व नरेश्वरम् । इति

अनेनास्माभिर्ज्ञायते एव पित्राज्ञा रामस्य कैकेयी मुखतो विदितेति । ततस्त दाज्ञापालनपरो बभूव रामः । अत्र रामस्य पितृवाक्यपालना-त्मको गुण स्साधारणः । इतो विशिष्य रामः पितरं सत्यप्रतिज्ञं चकार । तथा तं पितर मनृतदोषान्महता सत्येन तारयामास चेति विज्ञात मिद मस्माभिः । न केवल मत्र पितृभक्ति परायणत्वं रामस्य विशिष्य स्वीकरणीयं तदीयेनोत्तमगुणत्वेन, किन्तु रामः सत्पुत्रः अर्थात् सार्थकः पुत्रो भूत्वा पितरं त्रायते अनृतादोषात् । यदि रामः कैकेयी वचनानुसारेण वनगमनं नाङ्गीकरोति तदा दशरथो व्यर्थप्रतिज्ञोऽभविष्यत् न तु सत्यप्रतिज्ञः । राज्ञस्तु प्रतिज्ञा रामोत्पत्तेः पूर्वमेव कृता कैकेयीमुद्दिश्य । तामद्यनिर्वर्तयितुं रामस्य साहाय्यं राज्ञ आवश्यकं भवति । विना रामवनगमनेन नैव निरुह्यते राज्ञा स्वप्रतिज्ञा । ततश्च स अवश्यं सत्यपद भ्रष्टो भवेदेव । अतोद्य कर्तव्यं रामे परिनिष्ठितम् । तादृशस्य कर्तव्यस्य परिज्ञानेन रामः पितृवाक्य नेव केवलं नापालयत् किन्तु सत्यमपालयत् । इत्थं विचित्रा पितृण-मुक्तिः सम्प्राप्ता रामस्य । "सत्यः" "सत्यपरायण" इति द्वे विशेषणे (इत्थं) रामस्य चरित्रे असाधारणे दृश्येते ।

परिहासादि सन्दर्भेषु विदितोपि सत्यविषयः शब्देषु केवल-मसत्यता मायाति । न तत्रासत्यकल्पना विवेकविषया । रामस्तु परिपूर्णः पुरुषः । परिहासोपि मानवस्य नाऽसहजः । अनया दृष्ट्या रामस्य शूर्पणखया सह सम्भाषणं विज्ञेयं । शूर्पणखा राममपृच्छत्—

"इमं राक्षसैः सेवितं देशं त्वं कथ मागतः ? किमागमन कृत्यं ते?" इति । तदा रामः "ऋजुबुद्धितया सर्वमाख्यातु मुपचक्रमे" इति कथयन् कविरेवं वदति ।—

अनृतं न हि रामस्य कदाचिदपि सम्मतम् ।
विशेषेणाश्रमस्थस्य समीपे स्त्री जनस्य च ॥

अत्र रामस्य सत्यवादित्वं व्यक्तीकृतं कविना । किन्तु शूर्पणखायै रामस्य स्ववृत्तान्त कथनसमये स्वानुजं लक्ष्मणं प्रति "श्रीमानकृतदारश्च, अपूर्वीभार्यायाचार्थी, अनुरूपश्च ते भर्ता रूपस्यास्य भविष्यति" इत्यादि वचना न्यनृतानीति स्पष्टम् । अत्र व्याख्यातृभिश्च प्रयासः कृतस्तत्समर्थने । किन्तु यथा शूर्पणखाया रूपस्य तरुणः प्रियदर्शनश्च लक्ष्मण अननुरूप इत्येतत्प्रत्यक्षमपि सत्यं, अत्र परिहास वचनेषु विपरीतत्वोक्ति र्हास्य स्फोरकैव । न तु यथार्थतया स्वीकरणीया विज्ञै रिति विशिष्य विवरणं नावश्यक मिति मन्ये । भावयंतु भावुकाः परिसर संदर्भं पुरस्कृत्य । अतएव कवेरुक्तिः "अनृतं नहि राम स्येत्यादिना । किन्तु मूर्खा रसज्ञताविहीना च शूर्पणखा वचन मिदं तथ्यं मन्यते । तदेवोक्तं कविना यथा — "मन्यते तद्वचस्तथ्यं परिहासाविचक्षणा" इति । मूर्खायाः विरूपाया, दुर्वांछित विमोहितायाः, राक्षस्या स्सकाशं विज्ञपत्नी भ्रातृसहितो रामः केवलं परिहासं चकारेती दमवगन्तव्यं रसज्ञैः, न तु दोषान्वेषण दृष्ट्या शब्दार्थ परिज्ञानमात्र परत्वेन वा । रसास्वादनदृष्टि स्सहृदयाना मावश्यकी ।

अपिच धर्मेतरो वृत्तान्त अत्र न संवृत्तः। केवल मत्र सीताराम-लक्ष्मणै विदितं सत्य मसत्यत्वेन (विपरीतार्थकं यथा) परिहासप्रियो रामो ऽकथयत्।

अस्मिन्नेव सन्दर्भे शूर्पणखां लक्ष्मण एवं वदति। सीता-विषये परिहासोऽयम्।

एनां विरूपामसतीं करालां निर्णतोदरीम्।
भार्यां वृद्धां परित्यज्य त्वामेवैष भजिष्यति" इति।

कथा सर्वैरपि विदितैव। अत्रोऽत्र संग्रहत्वेनोक्तिः। न विवरणेन। लोकोत्तरसौन्दर्यवती सीता एव मत्र वर्णिता लक्ष्मणेनेति केवलोयं परिहासः विपरीतार्थप्रदः। नान्य इति निश्चितार्थ एव यथा रामेणान्ते लक्ष्मणायोक्तम्—

"क्रूरैरनार्यैं स्सौमित्रे परिहासः कथञ्चन, न कार्यः" इत्येष गुणपाठोपि बभूवास्मादृशाम्।

राम स्सुग्रीवाय स्व स्वभावं कथयति—

अनृतं नोक्तपूर्वं मे वीर कृच्छ्रेपि तिष्ठता।
धर्मलोभपरीतेन नच वक्ष्ये कदाचन॥ इति

कैकेयी मन्थरां वदति रामविषये

धर्मज्ञो गुणवान् (गुरुभिः) दान्तः कृतज्ञ स्सत्यवान्
शुचिः ।
रामो राजसुतो ज्येष्ठो यौवराज्य मतोर्हति ॥ इति

सीता रामस्वभावं रावणायारण्ये वदति–

दद्यान्न प्रतिगृह्णीयात् सत्यं ब्रूयान्नचानृतम् ।
एतद् ब्राह्मण रामस्य व्रतं धृतमनुत्तमम् ॥ इति

सैव हनुमते सुन्दरे काण्डे–

दद्यान्न प्रतिगृह्णीयात् सत्यं ब्रूयान्नचानृतम् ।
अपि जीवित हेतोर्हि रामस्सत्य पराक्रमः ॥ इति वदति

इत्थं सत्यसंयुक्ता रामस्य पितृभक्ति र्विशिष्टेति विज्ञेया। यथा तेनैवोक्त –

अतोषयन्महाराज मकुर्वन् वा पितुर्वचः ।
मुहूर्तमपि नेच्छेयं जीवितुं कुपिते नृपे ॥
यतो मूल नरः पश्येत् प्रादुर्भावमिहात्मनः ।
कथं तस्मि न्नवर्तेत प्रत्यक्षे सति दैवते ॥ इति

तादृशो रामस्य पिता दशरथः स्वपुत्र वनगमयं न चेच्छति। अपिच स्वस्य सत्यभ्रंशं न सहते। द्वैधीभावेन शोकेन च परीत स्स वृद्धः पुत्रवत्सलः। तदा कैकेय्यै वदति रामस्वभावं प्रति। यथा–

नालं द्वितीयं वचनं पुत्रो मां प्रतिभाषितुम् ।
स वनं प्रव्रजेत्युक्तो बाढ मित्येव वक्ष्यति ॥

वनगमनसमये रामं प्रति दशरथः —

न चैतन्मे प्रियं पुत्र शपे सत्येन राघव ।
छन्नया चलित स्त्वसि स्त्रिया भस्माग्निकल्पया ॥
वञ्चना यातु लब्धा मे तां त्वं निस्तर्तु मिच्छसि"
अनया वृत्तसादिन्या कैकेय्याभि प्रचोदितः ।
न चैतदाश्चर्यतमं यत्त्वं ज्येष्ठः सुतोमम ॥
अपानृतकथंपुत्र पितरं कर्तुमिच्छसि ॥ इति ।

वाक्यैरेतैः रामस्य पितृवाक्पालन परमार्थो विज्ञेयः । यत्पितरं सत्य-भ्रंशादरक्षयदिति । अन्ते रामः पितर मेवमाह

यस्तु युद्धे वरो दत्तः कैकेय्यै वरद त्वया ।
दीयतां निखिलेनैव सत्य स्त्वं भव पार्थिव !
नहि मे कांक्षितं राज्यं सुखमात्मनि वा प्रियम्
नैवाहं राज्य मिच्छामि न सुखं न च मेदिनीम् ॥
नैव सर्वानिमान् कामान् न स्वर्गं न च जीवितम् ।
त्वा महं सत्यमिच्छामि नानृतं पुरुषर्षभ !
प्रत्यक्षं तव सत्येन सुकृतेन च ते शपे ॥

इत्यादि रामवचनैश्च रामस्य सत्यपरायणत्वं व्यज्यते। इत्थं रामस्यार्थ-कामावपि धर्मैकपराविति तस्य पुरुषार्थत्रयेसमा पवित्रा च निष्ठा समवगन्तव्या । तदा दशरथः रामं वदति तच्छर्वरीमयोध्यायां वसेति, श्वः कल्ये साधयिष्यसीति च । किन्तु राघव एकरात्र मपि तत्रोषितुं नाङ्गीकरोति । कथयति

प्राप्स्यामि या नद्यगुणान् को मे श्वस्तान् प्रदास्यति ।
अपक्रमणमेवात स्सर्वकामै रहं वृणे ।
अर्थितोह्यस्मि कैकेय्या वनं गच्छेति राघव !
मयाचोक्तं व्रजामीति त स्सत्यमनुपालये ॥ इति

अत्र पुन स्स्वल्पमप्यन्यं विषयं सत्यविषयकं परामृशामः सूक्ष्मेक्षिकया । वनगमनसमये सुमन्त्रोरथं चोदयति ।

तिष्ठेति राजा चुक्रोश याहि याहीति राघवः ।
सुमन्त्रस्य बभूवात्मा चक्रयोरिव चान्तरा ॥ अत्र

राज्ञो वचनपालनं कर्तव्यं सुमन्त्रस्य । किन्तु रामो याहीति वदति राजाज्ञां तिरस्कुर्विति रामस्य सूचना । ततः कथं मन्त्री राज्ञः समीपे स्वप्रवृत्तिं समर्थ यिष्यति ? अतो रामस्येयं सूचना विवेचनीय या मन्त्रिण मसत्यवचनाय प्रेरयति । सैव मस्ति ।

नाश्रौषमिति राजान मुपालब्धोपि वक्ष्यसि ।
चिरं दुःखस्य पापिष्ठ मिति रा स्तमब्रवीत् ॥

किमिदं न्याय्यमिति विचारणीयम् । यदि राजवचन मनुसृत्य मन्त्री किञ्चित्समयं तत्र तिष्ठेत् तदनन्तर मपिगमन मनिवार्य मेव यद् राज्ञा रामेण मन्त्रिणा च विदितपूर्वमेव । अपितु "आलस्यादमृतं विष" मिति न्यायेन चिरं दुःखस्य निर्वाहेण न कोपि लाभः । किं च सः पापीयः । तस्मात्कार्यनिर्वाहे बुद्धिः कार्या । अनेन राजवाक्य निराकरणादिकं न च पापिष्ठं । राज्ञो दुःखस्य चिरस्थापनं पापिष्ठं भवतीति सन्दर्भेस्मिन्नदोषो दृश्यते । वस्तुतस्तु परिस्थित्यामस्यां सत्यासत्य विवेचनापेक्षया प्रधान सत्यपालनस्यैव प्राधान्य मिति पिण्डतार्थः पण्डितै रवगन्तव्यः । धर्मसूक्ष्मता परिशीलन मेतादृशेषु सन्दर्भेषु युक्तं भवति । एवं स्वल्पविषय स्सह रामचरिते बहूनि प्रमाणानि दृश्यन्ते तस्य सत्य सन्धता निरूपकाणीति रम्य मिदं रामचरितम् ।

धार्मिकता :—

"न हीच्छेय मधर्मेण शक्रत्व मपि लक्ष्मण"

इति रामवाक्यम् । तथैव

यद् द्रव्यं बान्धवानां वा मित्राणां वा क्षये भवेत् ।
नाहं तत्प्रतिगृह्णीयां भक्ष्यान् विषकृतानिव ॥ इति च ।

कैकेयी च जानाति रामो धर्मज्ञ इति । कविश्च बहुधा बहुशश्च रामस्य धर्मशीलतां व्यक्तीकरोति । धर्मप्रवृत्तश्च सहस्रधा वर्तते लोके । रामचरिते च सा सर्वतोमुखी तत्र तत्र दृश्यते ।

सीताराम सम्बन्ध कथने कविस्तयो र्धार्मिक मनुरागरहस्यं तन्मूलतया दाम्पत्य रहस्यं च भावगम्भीरै र्वचोभिः प्रकटयति। यथा-

प्रियातु सीता रामस्य दाराः पितृकृता इति।
गुणाद्रूपगुणाच्चापि प्रीतिर्भूयो व्यवर्धत॥

तस्याश्च भर्ता द्विगुणं हृदये परिवर्तते।
अन्तर्जातमपिव्यक्त माख्याति हृदयं हृदा। इत्यादि।

धनुर्भङ्गं कृत्वा वीर्यशुल्का मवाप रामः सीतां। तथापि (सीतावचनानुसारेण)

"दीयमानां न तु तदा प्रतिजग्राहराघवः।
अविज्ञाय पितुश्छन्द मयोध्याधिपतेः प्रभोः॥ इत्यनेन

रामस्य धर्मपरायणतैव व्यज्यते। राज्य परित्यागसन्दर्भे चित्रकूटे भरत प्रार्थना सन्दर्भे जाबालिवचो निराकरण सन्दर्भे च रामो धर्मपरायणो भासते। वनगमन समये आत्मान मनुगन्तु मुद्युक्तवतीं मातरं रामो निवारयन् पत्नीधर्मं बोधयति। यथा —

व्रतोपवास निरता या नारी परमोत्तमा।
भर्तारं नानुवर्तेत सा च पापगति र्भवेत्॥

अपि या निर्नमस्कारा निवृत्ता देवपूजनात्।
शुश्रूषा मेव कुर्वीत भर्तुः प्रियहितेरता।

एष धर्मः स्त्रिया नित्यो लोके वेद श्रुतिः स्मृतः ॥

इत्यादि वचनैः । अनेन रामस्य शास्त्रज्ञता, विद्वत्ता, तदनुष्ठान-परायणताच व्यक्ता भवन्ति । पुत्रानुसरणापेक्षया भर्त्रनुगमन मेव स्त्रियाः कर्तव्यमिति मातुरप्युपदेष्टुं समर्थो राम इत्यनेन तस्यौन्नत्य ज्ञायते । अनेनैव शीलेन राम स्सर्वोन्नतत्वं भजते । पित्रा, गुरुणा, मात्रा, जाबाल्यादिना च सम्भाषण समये राम स्यौन्नत्यमेव व्यज्यते । अतएव राम स्सर्वोन्नतः पुरुषोत्तम इत्ययं निष्कर्षः । राजनीति परिज्ञाने तदाचरणे च रामस्य धार्मिकता विशिष्टा लोकोत्तरा चेति तच्चरितं प्रमाणम् । वनगमन समये सीता "मयोध्यायामेवत्वं वसे"ति वदन् कथं वा तत्र वरतव्य मित्यस्मिन्विषये किञ्चिद्बोधयति । अत्र तेन यः प्रबोधः कृतः तत्परिशीलनेन रामस्य विग्रहवद्धर्मत्वं गम्यते । कालिदा-सोपि सूर्यवंशस्य धर्म प्रजानां तदनुसरणं चोक्त मनेनैव परिज्ञाने नेति भावयितुं शक्यं तद्वचनेन "रेखामात्र मपि क्षुण्णादामनोर्वर्त्मनः परम् । न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमवृत्तयः" इत्यादिना ।

सीतायै रामस्य प्रबोध एव मस्ति, यस्मिन् रामस्य राजनीति परिज्ञानं प्रस्फुटं भवति—

भरतस्य समीपे ते नाहं कथ्यः कदाचन ।
ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम् ॥
विप्रियं च न कर्तव्यं भरतस्य कदाचन ।
सहि राजा च वैदेहि देशस्य च कुलस्य च ॥

औरसानपि पुत्रान् हि त्यजन्त्यहितकारिणः ।
समर्थान् सम्प्रगृह्णन्ति जनानपि नराधिपाः ॥

इयं राजनीतिः । तदनुसृतो धर्मोऽप्यनुरणीय एव सद् बुद्ध्या सद्व्यक्तित्वेन च यथा—

भ्रातृपुत्र समौ चापि द्रष्टव्यौ च विशेषतः ।
त्वया भरत शत्रुघ्नौ, प्राणैः प्रियतरौ मम ॥ इति ।

वालिवध सम्बन्धीनि कानिचिद्वाक्यानि स्थूलदृष्ट्या परिशील्य रामस्य धार्मिकां राजनीतिं पश्यामः ।

पतितस्य वालिनः प्रश्नः –

पराङ्मुख वधं कृत्वा को नु प्राप्त स्त्वया गुणः ।
यदहं युद्ध संरब्धः शरेणोरसि ताडितः ॥
त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः ।
कुलीन स्सत्व सम्पन्न स्तेजस्वी चरितव्रतः ॥
"रामः करुणवेदीच प्रजानां च हिते रतः ।
सानुक्रोशो जितोत्साहः समयज्ञो दृढव्रतः" ॥
इति ते सर्वभूतानि कथयन्ति यशो भुवि ॥ इति ।

सोऽयं वाली स्व पत्न्या तारया यदा युद्धान्निवारितः तदा तामुवाच—

न च कार्यो विषादस्ते राघवं प्रति मत्कृते ।
धर्मज्ञश्च कृतज्ञश्च कथं पापं करिष्यति ? इति

स धर्मसूक्ष्म मविज्ञाय रामं प्रति गौरवभावेनैव स्थितः । तस्याऽज्ञतां धर्मसूक्ष्माऽनभिज्ञातां च रामस्तस्मै विवृणोति येन तत स्स विज्ञो बभूव रामस्य धार्मिकत्वं चाङ्गी चकार मरणात्पूर्वम् । तदित्थम्—
रामो वालिनं प्रति —

"भ्रातु र्वर्तसि भार्यायां त्यक्त्वा धर्मं सनातनम् । ···
तद्व्यतीतस्य ते धर्मात् कामवृत्तस्य वानर !
भ्रातृ भार्याविमर्शेऽस्मिन् दण्डोयं प्रतिपादितः ।
न हिते मर्षये पापं क्षत्रियोऽहं कुलोद्भवः ।
औरसीं भगिनीं वापि भर्यां चाप्यनुजस्य च ।
प्रचरेत नरः कामात् तस्य दण्डो वधः कृतः ।
वागुराभिश्च कूटैश्च पाशैश्च विविधै र्नराः ।
प्रतिच्छन्ना श्च दृश्याश्च गृह्णन्ति सुबहून् मृगान्···
विध्यन्ति विमुखा श्चापि न च दोषोत्र विद्यते ।
तस्मात्त्वं निहतो युद्धे मया बाणेन वानर !
अयुध्यन् प्रतियुध्यान् वा यस्मा च्छाखा मृगोह्यसि ।"

इतोयं रामस्य धर्मविषये सूक्ष्मेक्षिका । अन्ते वाली राम मुवाच ।
यथा —

यत् त्वमात्थ नरश्रेष्ठ! तदेवं नात्र संशयः।
प्रतिवक्तुं प्रकृष्टे हि नापकृष्टस्तु शक्नुयात्।
यद्युक्तं मया पूर्वं प्रमादाद्वाक्य मप्रियम्।
तत्रापि खलु मे दोषः कर्तुं नार्हसि राघव॥ इति

जाबालि वाद निरामन सन्दर्भे (चित्रकूटे) रामेणोक्त वाक्य जातं तद्राजनीतिज्ञतां धार्मिकतां सत्यनिष्ठां च प्रकटयति।

रामः —

यद्वृत्ता स्सन्ति राजान स्तद् वृत्ता स्सन्ति हि प्रजाः।
सत्यमेवानृशंस्य च राजवृत्तं सनातनम्।
तस्मात् सत्यात्मकं राज्यं सत्ये लोकः प्रतिष्ठितः।
धर्म स्सत्य परे लोके मूलं स्वर्गस्य चोच्यते।
सत्यमेवेश्वरो लोके सत्ये पद्माश्रिता सदा॥

इत्यादि। धर्मात्मानं रामं वनगमन समये तन्माता कौसल्यापि तथा धर्मप्रियत्व मेव बोधयन्ती "धर्मो रक्षति रक्षित" इति मन्यमाना आशी र्ददाति यदस्माकं रामस्य धर्मप्रतिपालनं च ज्ञापयति।

यं पालयसि धर्मं त्वं धृत्या च नियमेन च
स वै राघवशार्दूल धर्मस्त्वा मभिरक्षतु॥

येभ्यः प्रणमसे पुत्र चैत्येष्वायतनेषु च ।
तेन त्वा मभिरक्षन्तु वने सह महर्षिभि ॥

इत्थं कति वा प्रमाणानि रामस्य सत्य धर्मपरत्वे गणयामः? अनन्तानि खलु तानि गणनीयानि मननीयान्यभ्यसनीयानि चास्माकं यथा वयं राम मादर्श भजामः ।

अपि च रामः —

शान्तः सान्त्वयिता श्लक्ष्णः कृतज्ञोविजितेन्द्रियः ।
व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ॥
उत्सवेषु च सर्वेषु पितेव परितुष्यति"

अनेन रामस्य व्यक्तित्व राजत्वलक्षणानि व्यक्तानि भवन्ति । अभिषेक-विघाते प्राप्तेपि रामे या धीरता दृष्टा सा तस्य व्यक्तित्वं शान्तत्वं च द्योतयति ।

आभिषेचनिकं भाण्डं कृत्वा रामः प्रदक्षिणम् ।
शनैर्जगाम सापेक्षो दृष्टं तत्राविचालयन् ॥
न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति ।
लोककान्तस्य कान्तत्वं शीतरश्मे रिवक्षपा ॥

न वनं गन्तु कामस्य त्यजतश्च वसुन्धराम् ।
सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥

इत्यादि वाल्मीकिवचनै स्तस्य जितेन्द्रियत्वं च दृष्टं भवति ।

"धारयन् मनसा दुःखमिन्द्रियाणि निगृह्य च ।
प्रविवेशात्मवान् वेश्म मातुरप्रियशंसिनम् ।"
"उचितं च महाबाहु र्न जहौ हर्ष मात्मवान् ॥"

इत्यादयः प्रमाणं पूर्वोक्तलक्षणानाम् ।

अथ च राजा रामः प्रजापालनतात्पर्ये प्रजानां सुखदुःखे स्वीये भावयति यथा पिता स्वीयसन्तते रित्युत्तमराजलक्षणं चेदम् । इद-मेवादर्शं गृह्णन् कालिदासः कथयति दिलीपं प्रति —

"प्रजानां विनया धाना द्रक्षणाद्भरणादपि
स पिता पितरस्तासां केवलं जन्महेतवः" इति

स एव महाकवि र्दशरथस्य प्रजाक्षेमङ्करत्वं च कथयति यथा—

"अहमेव मतो महीपते रितिसर्वः प्रकृतिष्वमन्यत"

इत्यादि कथितं यद् सर्वेषु समदर्शित्वं प्रजाप्रियत्वं चेति कथ्यते ।

**वनवासो महोदयः —**

रामः सीता मुवाच —

दर्शितं चित्रकूटस्य मन्दाकिन्याश्च शोभने ।
अधिकं पुरवासच्च मन्ये तव च दर्शनात् ॥

विधूत कल्मषैस्सिद्धै स्तपोदमशमान्वितैः ।
नित्यविक्षोभित जलां विगाहस्व मया सह ॥

...नायोध्ययै न राज्याय स्पृहये च त्वया सह ।"

इत्यादयो रामस्य वनवास महोत्साहं प्रकटयन्ति ।

राक्षसीनामपि वचनेषु रामः कन्दर्प सदृशः । सुकुमारो, महासत्वो, सर्वभूतहिते रतः, गुणवान् महोजाश्च भासते ।

**श्रीरामः कृतज्ञशेखरः —**

स एव माह सुग्रीवम्

उपकारेण वीरस्तु प्रतिकारेण युज्यते ।
अकृतज्ञोऽप्रतिकृतो हन्ति सत्ववतां मनः ॥

अनेनास्य हृदयगत मौदार्य मुत्तमता च व्यज्येते । तस्योत्तम भ्रातृत्व सखित्वादीनां गुणानां तेन भरत सुग्रीवादि सन्बन्ध सन्दर्भाः प्रमाणम् ।

शत्रुत्वेपि रामस्य आदर्शभाव एव दृश्यते शुकसारणयोः स्वेच्छाप्रदानादिना । युद्धे रावणं विरथं कृत्वा रामो वदति—

कृतं त्वया कर्म महत् सुभीमम्
हतप्रवीर श्च कृतस्त्वयाहम् ।
तस्मात् परिश्रान्त इति व्यवस्यान्
न त्वां शरै र्मृत्युवशं नयामि ॥
गच्छानुजानामि रणार्दित स्त्वम्
प्रविश्य रात्रिंचरराज लङ्काम् ।
आश्वास्य निर्याहि रथीच धन्वी
तदा बलं द्रक्ष्यसि मे रथस्थः ॥

एव मत्र रामं धर्मवीरं, सत्यपराक्रमं, पराक्रमेष्वुदारं पश्यामः । पद्धतिरियं न कुत्रापि दृश्यत इति मन्ये । ततो रामबाण भयार्दितो रावणः पुरीं लङ्का प्रविश्य "मातङ्ग इव सिंहेन गरुडेनेव पन्नगः" महात्मना राघवेणाभिभूतोऽभवत् ।

अथ च—

"ब्रह्मदण्डप्रकाशानां विद्युत्सदृश वर्चसाम् ।
स्मरन् राघव बाणानां विव्यथे राक्षसेश्वरः ॥"

युद्धे विभीषणेन दर्शितं रावणं दृष्ट्वा इत्थं भावयति यदेतस्यानुत्तमत्वं शत्रावपि वैशिष्ट्य दर्शने हृदय नैर्मल्यं च द्योतयति ।

यथा —

अहो दीप्तो महा तेजा रावणो राक्षसेश्वरः ।
आदित्य इव दुष्प्रेक्ष्यो रश्मिभिर्भाति रावणः ॥

इत्यादि । तादृशयो रामरावणयो र्युद्धं—

गगनं गगनाकारं सागर स्सागरोपमः ।
रामरावणयो र्युद्ध रामरावणयोरिव ॥
एवं ब्रुवन्तो ददृशु स्तद्युद्ध रामरावणम् ।

रावणान्त्यक्रिया सन्दर्भे रामो विभीषणेन :—

अवश्यं तु क्षमं वाच्यो मया त्वं राक्षसेश्वर !
अधर्मानृत संयुक्तः कामं त्वेष निशाचरः ।
तेजस्वी बलवान् शूरः संयुगेषु च नित्यशः ।
शतक्रतुमुखैर्देवैः श्रूयते न पराजितः ।
महात्मा बलसम्पन्नो रावणो लोकरावणः ।
मरणान्तानि वैराणि निवृत्त नः प्रयोजनम् ।
क्रियता मस्य संस्कारो ममाप्येष यथा तव ॥

इत्याद्यकथयत् । अनेन रामस्यादर्शशत्रुत्वं तस्य शत्रावपि सोदर भावः व्यज्येते । इद मेव लोकोत्तरगुणाधिक्त्वं रामस्य पुरुषोत्तमत्वं च ।

एव मनन्त गुणाधिकता रामस्य प्रत्येक ग्रन्थरचनाया स्समग्रा सामग्री भवतीत्यलम् ।

—X—

## ३. सौन्दर्यलहरी

अज्ञानान्तर्गहन पतिता नात्मविद्योपदेशैः
त्रातुं लोकान् भवदवशिखा ताप पापच्यमानान् ।
मुक्त्वा मौनं वटविटपिनो मूलतो निष्पतन्ती
शम्भोर्मूर्ति श्चरति भुवने शङ्कराचार्यरूपा ॥

शङ्कर श्शङ्कर स्साक्षादिति शङ्कर भगवत्पादं प्रति भावना । "सयां" "कम्बोडिया" देशेषु यानि शिलाशासनानि पुरावस्तु परिशोधकै र्लब्धानि तेष्वाचार्य स्वामिनः प्रशंसा—

"येनाधीतानि शास्त्राणि भगवच्छङ्कराह्वयात् ।
निश्शेष सूरि मूर्धालिमालालीढांघ्रि पङ्कजात् "॥

इत्यस्ति किल । अयं कम्बोडिया देशीयेन केनचिदालय प्रतिष्ठापकेन लिखिते शिलाशासने अस्तीति कथयन्ति । न केवल मुपनिषद्गीताब्रह्म-सूत्राणां भाष्य प्रवचनान्येव अपिच शङ्करकृतानि स्तोत्राणि च सुन्दर-सुप्रसिद्धान्येव । तत्वबोधनेनाज्ञानतिमिरापह श्शङ्करो यानि स्तोत्रा-ण्यकरोत् तान्यस्माकं नित्यपारायणोपयुज्यमानानि । अक्षरमेव य आचार्यः परब्रह्मतया अदर्शयत् तस्य स्तोत्रेषु बीजाक्षर सम्पुटीकरणं

गुप्तनिक्षिप्तम् । स्तोत्ररहस्य परिज्ञानं विज्ञानप्रदं भवति मोक्षदायकं च । स्वामिनानेन कृतेष्वनेकेषु स्तोत्रेषु सौन्दर्यलहरीं अपूर्वविशिष्ट-सौन्दर्यं भासमानं काव्यमिति गुरवो वदन्ति । देवीनवरात्र पुण्यकाले स्तवराजस्य सौन्दर्यलहरीनामक ग्रन्थस्य पठन मननादिकं सम्प्रदाय समुचितत्वेन भासते । आनन्दस्वरूपिणी मादिशक्ति मम्बा माराध्या-द्वैत सिद्धिप्राप्त्यर्थं क्रियमाणा कृषिरेव सौन्दर्यलहरी भवति । जग-ज्जननी शिवयुवतिः (पुरहरजाया) नानारूपै रेक मनेकं कुर्वाणा निराकाराय ब्रह्मणे आकारान् कल्पयन्ती अस्मानानन्दयितुं मनुग्रहीतुं च चिदानन्दाकारे विश्वशरीरा विलसति । विना तन्मायाशक्ते रनुग्रहेण वय मनेकत्वादेकत्वं न भजामः । अद्वैतसिद्धिप्राप्तये आदिशक्तेरनुग्रह आवश्यक इत्याचार्यस्योपदेशः ।

अतएव स्वामी "शिव श्शक्त्या युक्तो यदि, भवति शक्तः प्रभवितु" मित्यादिनैव स्तोत्र मुपचक्रमे । सौन्दर्यलहर्यां योगशास्त्र रहस्यं, मन्त्रशास्त्र सारं च स्तः । योगसाधन मार्गेण सिद्धिं सूचयन् सुन्दरतर कविता माधुरी विलासएव सौन्दर्यलहरी बभूव । ग्रन्थमेनं प्रति जनश्रुति रेका प्रचलति । यथा – शङ्कर भगवत्पादाः कैलासं गत्वा ततः पञ्चलिङ्गान्यानयन् किल । तेष्वेक मेव लिङ्गं चन्द्रमौली-श्वर लिङ्गाख्य मस्ति । शङ्कराचार्य सौन्दर्यलहर्यां समयाख्य चन्द्र-कलामेव श्लोकशते नास्तुवत् । कैलासस्थं मन्त्रशास्त्रमपि आनयन् स्वामी नन्दिकेश्वरेण निरुद्धः । शास्त्रं च तेन स्वीकृत मभवत् । तदा तस्य कश्चित् भागएव स्वामिनः लब्धः । तस्मिन किलैकचत्वारिंशत्

श्लोकास्सन्ति । शिष्टा एकोनषष्टिश्लोकाः स्वामिना स्वयं रचिता इति कथ्यते । सौन्दर्यलहरी अनुपम मन्त्रशास्त्रत्वेन परिगण्यते । आद्यो-भागः मन्त्रशास्त्रम् । द्वितीयश्च आनन्ददं स्तवं भभूव । इत्थमवततार सौन्दर्यलहरी ।

इदं च ज्ञायते यद् "फिलडाल्फिया म्यूजियम् आफ् आर्टस् " नामक संस्थायां अमेरिकादेशस्थायां सौदर्यलहरी श्लोकाननुसृत्य चित्रितानि चित्राणि सन्तीति । तदधिकारिणः त्रीणि चित्राणि तस्तम्बन्धिभिः श्लोकै स्सह मद्रास् विश्वविद्यालयाधिकारिभ्यः प्रेष-यन्तः तद्विवरण मपृच्छन्तिति तेष्वेकः श्लोकः "मनस्त्वं व्योमत्व" मित्यादिरिति च श्री श्री श्री काञ्चीकामकोटि पीठाधिपतिः स्वामी जगद्गुरु रवदत् ।

अंबिकाशक्तिः, तत्पाद परागप्रभावः, मूलाधारादि चक्रस्थ पृथिव्यादि तत्वान्यतिक्रम्य सहस्रार कमले सदा शिवेन सह अंबिका विरहतीति कथनेन मंत्रशास्त्र मनुसृत्य योगसाधनमार्गे मातुस्साक्षात्करणं च क्रमश स्सौन्दर्यलहर्यां विवृता विषया भवन्ति । सकलपुरुषार्थ साधक देवी नामात्मकं नूतन तन्त्रं बीजाक्षरस्वरूपं च सौन्दर्यलहरी विवृणोति पूर्वोत्तर कौल मत द्वारेण समयाचार मतस्यापि विवणं कृतम् । ततः किरीटादारभ्य पादपर्यन्तं सुविस्तृत स्वरूपवर्णनात्मकः स्तवः कृतः । षट्कमल भेद सिद्धान्त प्रस्तावेण स्तोत्रं समाप्तम् । आदिशङ्कर स्वीयं निरहङ्कारप्रह्वी भावं चरमश्लोके प्रदर्शयत् ।

अधिगत योगविद्यानां मन्त्रतन्त्रज्ञानां च सौन्दर्यलहर्यर्थगतिः सुलभतरेत्युक्तौ न विप्रतिपत्तिः। तथापि आचार्य स्वामिनः अमृत-मयेषु वचनेषु पूता कविता माधुरी मादृशैः कैश्चित् उपासकैश्च कैश्चित् तन्मनन तन्मयता चानु भूयत एव। अतोऽयं प्रयत्नः सौन्दर्य-लहरी समालोचने क्रियत इति सविनय विनमितोऽहं निवेदयामि।

यदि शिवस्यापि शक्तियुक्तत्वा भावे स्पन्दितु मप्य कुशलत्वं दृश्यते तर्हि त्वां प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवतीति प्रश्नेन शक्त्याराधन मावश्यक मित्यादौ स्थिरीकृतम्।

देवींपुरस्थादित्थं प्रतिष्ठापयति स्वामी ......

**क्वणत्कांचीदामा करिकलभकुम्भस्तननता**
**परिक्षुण्णा मध्ये परिणतशरच्चन्द्रवदना।**
**धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः**
**पुरस्तादास्तां नः पुरमथितु राहो पुरुषिका॥**

एवं त्रिपुरान्तकस्याहङ्काररूपा देवी मणिपूर चक्रे दृश्यते। मूलाधार स्वाधिष्ठान मणिपूर, कानाहत, विशुद्धाज्ञारूप षट् चक्रेषु क्रमशः पृथिव्यग्निजलपवनाकाश मनस्तत्वानि सन्ति। कुलपथं नाम सुषुम्ना-मार्गः। तन्मार्गं सर्वमपि भित्वा देवी सहास्रारकमले सदाशिवेन सह विहरतीति व्यक्तीक्रियते। योगिनां समयाचारपराणां कुण्डलिनी शक्त्युत्थापनादारभ्य सहस्रार कमल प्रदेश पर्यन्तां साधना मेकः

श्लोकः कथयति । आज्ञा नाम ईषद् ज्ञानम् । अस्मिन् चक्रे देवी क्षणं विद्युदिवाभाति । समाधावुपासकाना मत्र ब्रह्मग्रन्थिभेदो भवति । ईषद्ज्ञानप्राप्ति श्च भवति । अर्थात् देवी चतुर्विंशति तत्वान्यतिक्रम्य पञ्चविंशेन सदाशिवेन सहिता षड्विंशतितत्त्वरूपा परमात्मतया न्यवह्रियत इति सिद्धान्तः । इमं प्रतिपादयन् देवी मेवं स्तौति –

महीं मूलाधारे कमपि मणिपूरे हुतवहम्
स्थितं स्वाधिष्ठाने हृदि मरुत माकाशमुपरि ।
मनोऽपि भ्रूमध्ये सकलमपिभित्वा कुलपथम्
सहस्रारे पद्मे सह रहसि पत्या विहरसि ॥इति॥

सकलपुरुषार्थसाधक नूतनतन्त्रविवरणार्थ मादावाचार्य इत्थं स्तौति ।

चतुष्षष्ट्या तंत्रै स्सकलमतिसन्धाय भुवनम्
स्थितःतत्त त्सिद्धि प्रसवपरतन्त्रै पशुपति : ।
पुनस्तन्निर्बन्धादखिल पुरुषार्थैकघटना-
स्वतन्त्रं ते तन्त्रं क्षितितल मवातीतरदिदम् ॥

भगवति । ईश्वरस्तत्तत्सिद्ध्यनुगुणै श्चतुष्षष्टि मायाशम्बरादि तन्त्रै र्लोकं वशीकृत्य क्रीडति । अथ पुनस्त्वद्बलात्कारात् चतुष्षष्टि तन्त्रोक्तं सर्वसिद्धान्तरूपं सर्वपुरुषार्थहेतुभूतं ते तन्त्रं ईश्वरकृतं भवदुपदिष्टं सत् भूतलमवततारेति भावः ।

किं तत्तन्त्रम् ?

शिवश्शक्तिः कामः क्षितिरथ रविश्शीतकिरणः
स्मरो हंस श्शक्रः तदनु च परा मार हरयः ।
अमी हृल्लेखाभि स्तिसृभि रवसानेषु घटिता
भजन्ते वर्णास्ते तव जननि ! नामावयवताम् ॥

"क, ए, ई, ल ह्रीं; ह, स, क, ह, ल ह्रीं; स, क, ल, ह्रीं"

इत्येतदेव देवीनामात्मकं नूतनं तन्त्रम् । इदमेव विवृतमुक्तश्लोके । शिवः, शक्तिः, कामः, क्षितिः इत्येतेषां पदानां क्रमशः क, ए, ई, ल, इति वर्णा अर्थाः । रविः, शीतकिरणः, स्मरः, हंसः, शक्रः, इत्येतेषां क्रमेण हकार, सकार, ककार, हकार, लकारा अर्था ; ततः परा मारहरय इत्यनेन सकार, ककार, लकारा उक्ताः । अमी वर्णाः त्रिष्ववसानेषु ह्रींकारैः घटिताः सन्तः तवनामावयवतां भजन्त इति भगवत्पादा अत्र सङ्केतरूपेण देवीनूतनतन्त्रं प्रकटी कुर्वन्ति ।

समयाचारमतं विवृण्वन् आदौ तस्यावश्यकं द्विविधं कौलमतं द्वाभ्यां श्लोकाभ्यामुवाच । यथा—

शरीरं त्वं शम्भोः शशिमिहिरवक्षोरुहयुगम्
तवात्मानं मन्ये भगवति ! नवात्मानमनघम् ।
अतश्शेषः शेषी त्ययमुभय साधारणतया
स्थित स्सम्बन्धो वां समरसपरानन्दपरयोः ॥

मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि
त्व मापस्त्वं भूमिस्त्वयि परिणतायां न हि परम् ।
त्व मेव स्त्वात्मानं परिणमयितुं विश्ववपुषा
चिदानन्दाकारं शिवयुवति भावेन बिभृषे ॥

दृग्गोचरोयं व्यस्तप्रपञ्चः अंबिका स्वरूप एव । सर्वव्यापिन्याः प्रपञ्चा-कृतेः परदेवतायः स्तनद्वयं सूर्यचन्द्रावेव । आतप चन्द्रिकयोर्विना जगदेव नास्ति । माता यथा शिशूनां स्तन्यं ददाति तथैव सूर्यचन्द्र रूप पयोधराभ्यां जगन्माता अमृत धारावर्षं दत्वा समस्तान् लोका नमितेनानुरागेण रक्षति । अत एव मातरं "तवात्मानं नवव्यूहात्मिकां आनन्दभैरवाकृतिं मन्ये" इति स्तौ त्याचार्यः । भगवत्याः शम्भो-श्शरीरत्वात् शिवपार्वत्यो स्सम्बन्ध श्शेषशे ष सम्बन्धोभवति । अयं सम्बन्धः सामरस्य मवाप्य उभयसाधारणतया स्थित इति भाव्यते । अपिच भगवती पञ्चभूतस्वरूपा । तदतीतं मन श्च सैव । सर्वे रूपा स्तस्याः परिणाम रूपा एव । नैतन्मात्र मेव । किन्तु योऽस्माकं ज्ञानलेशो आनन्दश्च एतावपि तवैव चिदानन्द च्छाये । त्वं शरीरं । शिव श्शरीरी । शिव युवति भाव इत्थं युवयोः स्फुटीभवतीति स्तुतिः ।

भगवति! षट् चक्रस्थानि पृथिव्यादि तत्त्वानि त्वमेव । त्वयि परिणतायां अर्थात् जगद्व्यापिन्यां सत्यां अन्यन्नास्ति । त्वमेव आत्मरूपं प्रपञ्चेन संयोज्य एकं कर्तुं चिच्छक्ते रानन्दभैरवस्य च रूपं

च्चिरत्ते विभूषे । इत्यस्या विवृति रेवमवगन्तव्या । एव माचार्य श्शक्ते स्सम्यक् परिज्ञानेनाराधनं ज्ञापयति ।

जगन्मातरि भवान्या मनन्य भक्ति र्यदि भवति तदा सा भक्तायाद्वैतमुक्ति दिशतीति तथ्यमेतत् । इममर्थ मेवं व्यक्ती कुर्वन्ति भगवत्पादाः —

**भवानि । त्वं दासे मयि वितर दृष्टिं सकरुणा**
**मिति स्तोतुं वांछन् कथयति भवानि त्वमिति यः ।**
**तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं**
**मुकुन्द ब्रह्मेन्द्र स्फुटमकुट नीराजितपदां ॥**

हे मातः त्वदीये दासे मयि कृपादृष्टिं वितरेति प्रार्थयितु मिच्छन् भक्तो यदा "भवानि त्व" मित्यारभते तदैव त्वं तस्य प्रार्थनां समग्रा मश्रुत्वैव तन्मुखतः भवानित्वमिति पदद्वय श्रवणानन्तर मेव तत्क्षणं सायुज्यं ददासीत्यर्थः । तेन तु प्रार्थिता करुणा दृष्टिः । दत्तं त्वया सायुज्यं । वस्तुतस्तु तदा तेन तन्नापेक्षितम् । परिपूर्णया भक्त्या भक्तः अयाचित मपि प्राप्नोतीति यावत् । अत्रायं चमत्कारः । भवानि त्व मित्यस्य अहं त्वं भवानीत्यर्थः । भवानीति भूधातोः लोटि उत्तम पुरुषैक वचनम् । अनेन भक्तस्य भवान्या अभिन्नत्वं व्यक्तीकृतं यद् ज्ञानेनाज्ञानेन वा भक्तेनोक्तम् । अतस्तस्य सायुज्य प्राप्तिरित्यनन्य भक्ते रयं प्रभावः प्रकटितः ।

सरस्वत्या लक्ष्म्या विधिहरि सपत्नो विहरते
रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा ।
चिरं जीवन्नेव क्षपित पशुपाशव्यतिकरः
परानंदाभिख्य रसयति रसं त्वद्भजनवान् ॥

समयाख्य चन्द्रकलां त्वामुपासित्वा सरस्वती लक्ष्म्यो र्निधानो भूत्वा भक्तः ब्रह्मणो विष्णोश्च विद्वेषी भवति । जीवाविद्या सम्बन्धं त्यक्त्वा चिरं जीवति । ततः परानन्दरस मनुभवति भगवती आदौ सरस्वतीं ददाति । तेन ज्ञानी भवति भक्तः । तत श्च लक्ष्मी कटाक्ष प्राप्तौ तदुपयोगे तस्य सम्यक ज्ञानं तेन दीर्घायुः परानन्दयो रनुभव इति तत्वम् । एव सादाख्य कलोपासकाना मैहिकामुष्मिक सिद्धिरिति च। अयं षट्कमल भेद सिद्धान्तः ।

समं देवि स्कंदद्विपवदन पीतं स्तनयुगं
तवेदं नः खेदं हरतु सततं प्रस्नुत मुखं ।
यदालोक्याशङ्का कुलित हृदयो हास जनकः ।
स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झडिति ॥

विघ्नेशस्कन्दाभ्यामेकवार मेव पीतं देव्याःस्तन्य मस्माकं खेद मपहरत्विति प्रार्थयन्नाचार्य अत्र कविताचमत्कृतिं प्रदर्शयति यत्कवीनां मार्गदर्शक बभूवेति वक्तुं शक्यते । (यथा आन्ध्रकविता पितामहेन पेद्दनार्येण स्वीय काव्यस्य स्वारोचिष मनुसम्भवस्यारंभसमयप्रार्थनायां

"अंकमु जेरि शैलतनया" इत्यादि पद्यनिर्माणे भ्रान्तिमदलङ्कार निर्माणेन भाविकथा रहस्य सूचनात्मक मपि कविता शिल्पं कृतम् ) आशङ्काकुलित हृदयो हेरम्बः स्वकुम्भौ परिमृशती त्यनेन सत्यं स हासजनक एव भवति । भक्ति भाव परीता भावव्यक्तीकरण प्रौढता आचार्यस्य तदाचार्येणापि पीतमेवेति ज्ञायते लोकेनानेन । यथा—

तवस्तन्य मन्ये धरणिधर कन्ये हृदयतः
पयः पारावारं परिवहति सारस्वतमिव ।
दयावत्या दत्त द्रविड शिशु रास्वाद्य तवयत्
कवीनां प्रौढाना म जनि कमनीयः कवयिता ॥

अनेनाचार्यस्य स्कन्दहेरम्ब सादृश्यं दृश्यते । एवं भवान्या अनुग्रहस्य पात्र माचार्यपाद इति सत्यम् । तादृशस्य जगद्गुरो भक्तिपारम्य परिपुष्टां विनय सम्पदं दृष्ट्वा पुलकिततनवो भवामः ।

"दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपिशिवे ।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकर निपातो हिमकरः ॥

जगन्माता ईश्वरस्यार्धाङ्गी । आचार्य स्साक्षात् शिवावतार एव । अतस्सगुरुः परदेवतायाः प्रतीकैव । तथापि भक्ताना मस्मादृशां

हृदये भक्तिबीजावापार्थं आत्मानं न्यूनीकृत्वा "दीनं दवीयांसं मामपि" इति एतै विनयविनमितत्वं बोधयत्वाचार्यः। ममापीत्यनेन मदधिकास्सन्त स्संत्विति भावना। आचार्य प्रति—

"सुविनयो यस्य स्वभावायते" इति कथ्यते खलु इत्थं महौदार्येण आचार्य भगवत्पादै रस्माकं दत्ता महानिधिरिति मत्वा कण्ठस्थी करणीया कृतिरियम्। कृताचानेकैः।

तथापि गुरुरित्थं वदत्यन्ते।

**प्रदीप ज्वालाभि र्दिवसकर नीराजनविधिः**
**सुधासूते श्चंद्रोपल जललवै रर्घ्य रचना।**
**स्वकीयैरंभोभि स्सलिल निधिसौहित्यकरणं**
**त्वदीयाभिर्वाग्भि स्तव जननि वाचां स्तुति रियं॥**

=)o(=

## ४. कालिदासस्य धर्मदृष्टिः

★

**उपमाविशिष्टता : —**

दिलीपः

शब्दजातमशेषन्तु धत्ते शर्वस्य वल्लभा ।
अर्थरूपं यदखिलं धत्ते मुग्धेन्दुशेखरः ॥

इत्यनेन वायुपुराण प्रवचनेन शब्दार्थौ पार्वतीपरमेश्वराधीनाविति ज्ञायते । एतद्रहस्य परिज्ञाता कालिदासः स्वस्य रघुवंशकाव्यस्योपक्रमः पार्वतीपरमेश्वर नमस्कारेण करोति । सूक्ष्मदृष्टे रेतच्छब्दार्थ परिज्ञानमहिमा लक्ष्यते ।

विषयमिमं हृदि निक्षिप्य रघुवंश प्रथमश्लोकपरिशीलनं समञ्जसं भवति । "उपमा कालिदासस्ये"ति या प्रतीति स्तस्या हेतु मपि एतत्प्रथमश्लोक परिशीलनेनैव वयं ज्ञास्यामः भिन्न भिन्न प्रयोजनापेक्षया भिन्न भिन्न स्थलेषु कालिदासेन प्रयुक्ता उपमा बहुमुखं भासते । सर्वत्रापि प्रत्येकतां प्रदर्शयति । एकत्र सा अलौकिका । अन्यत्र सामान्यतया दृश्यमाना विशिष्टा विकसति ।

अलङ्कारस्तु काव्यशोभाधायकः । काव्यस्यात्मात्वन्यः । स

एव ध्वनिरिति सर्वै रङ्गीकृतमिति वक्तुं शक्यते। अस्तु वा उपमाया अलङ्काररराजत्वम्। न खलु सैवात्मा काव्यस्य। एत द्वचना मात्रेणैव कथं कालिदासेनेयं प्रतीतिर्लब्धा ? इति सन्देह स्समञ्जस एव भासते किन्तु कालिदासः उपमा मूलत एव रसनिष्पत्तिं चकार। काव्यात्मानं व्यक्तीकर्तु मिममलङ्कारं साधनतया स्वीचकार। यदीद मवगम्यते तर्हि तत्प्रतीते र्गाम्भीर्यं व्यक्तं भवति।

तत्पश्यामः प्रथमं प्रथमश्लोकादारभ्य तथैवान्येषु केषुचिदपि श्लोकेषु।

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वती परमेश्वरौ॥**

जगतः पितरौ पार्वतीपरमेश्वरौ वागर्थप्रतिपत्तये अर्थात् शब्दार्थयो स्सम्यक्परिज्ञान प्राप्तये नमा मीति भावः। पार्वतीपरमेश्वरवन्दनं वागर्थप्रतिपत्तिनिमित्तकं कथं स्यात् ? प्रथम प्रस्तुतं कारण मस्ति। अथ च पार्वती परमेश्वरौ वागर्थाविव संपृक्तावित्यवगतिः। तत्वतः पार्वतीपरमेश्वरौ द्वौ न स्तः। अपि त्वर्धनारीश्वर एक एव देवः। अर्थरहितः शब्दः, शब्दरहितो वा अर्थः न भवतः। ईदृश मविनाभावत्वं जगत्पित्रोरस्ति। अद्वैतभावे द्वैतभावस्य भासमानता चमत्क्रिया।

श्लोकेऽस्मिन् "पितरौ" इत्येकशेषः समासः। माताच पिता चेति विग्रहवाक्येन निष्पन्नोयं शब्दो द्विवचनस्थः। आदौ शब्दस्यास्य स्वरूपं तदर्थंच भावयित्वा ततो वागर्थाविवेत्यस्य उपमान भूतस्य

शब्दस्य तत्वावगतिः कर्तव्या । वागर्थाविवेति समस्त मेकं पदं अत्र पूर्वोक्तस्यैक शेषस्योपमान भूतम् । इवेत्यनेनात्र समासः । यदि वय मर्थं भावयामः तस्यावगतिः स्यात् । केवल शब्दस्यैव दर्शने तन्मात्र सन्दर्शन प्राप्ति र्भवति । किन्तु शब्दार्थ सम्बन्धोनित्यः । स एवाभिन्न स्वरूपः । तस्मादिद मुपमानं पवित्रं परमार्थस्फोरकं च ।

शब्दो नित्यः । स एव परब्रह्म स्वरूपश्चेति परिज्ञान प्राप्तये तदधिदेवता स्वरूप मर्धनारीश्वर दैवतं परिज्ञाय तदनुग्रह प्राप्तये प्रयतितव्य मित्येष महाकवेः कालिदासस्योपदेशः । एतादृश भावास्वादन योग्यतायाः रसज्ञतायाः प्राप्तये प्रथमस्माभिः अस्मत्सकलशास्त्राणां काव्यादिसारस्वत प्रक्रियाणां च आध्यात्मिक विद्या प्राप्ति साधनत्वे स्थिति रवगन्तव्या । शब्दब्रह्मवादिनां वैयाकरणानां मत मनुसृत्य काव्यामृत रसास्वादन द्वारेण परब्रह्मानुसन्धानं यदि वयं साधयितुं प्रयतेम तदास्माक मीदृशस्य काव्योपक्रमस्य परमार्थः प्रत्यक्षी भवति ।

किमुपमालङ्कारस्य प्रयोजनम् ? विषयविवरणार्थं सुपरिचितेन वस्तुना सादृश्यं दर्शयेन् कवि र्वक्तव्यांशं सुलभग्राह्यं करोति । कवे रनेन प्रयत्नेन सुप्रसिद्ध साम्य प्रदर्शन रूपेणा ध्येतॄणां सुलभावगात स्सिध्यते । तस्यापि कथनस्य रम्यत्वात् तस्यालङ्कारत्वसिद्धिः । अलङ्कार राजत्वं च । अत एवाय माश्रयणीयः कवीनां । यां कामपि कालिदासोपमां स्वीकुर्वन्तु सा रसानुभूतिं कल्पयन्ती औचित्येन रम्या विराजते ।

तस्याः खुरन्यात्य पवित्र पांसु
मपांसुलानां धुरि कीर्तनीया ।
मार्गं मनुष्येश्वर धर्मपत्नी
श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ॥

श्लोकेस्मिन्नुपमालङ्कारं भावयन्तु रसज्ञाः। प्रजाभिलाषी दिलीपः तदर्थं परितपन् तस्यास्ति साधनं परिज्ञातुं धर्मपत्न्या सुदक्षिणया सहितः गुरोर्वशिष्ठस्याश्रममागतः । गुरूपदेश मनुसृत्य दम्पती नन्दिनी मर्चयतः । आहारार्थं यदा गौ ररण्यं गच्छति तदा सुदक्षिणा तां किंचिद्दूर मनुगच्छति । राजातु तया सह अरण्ये आसायं सञ्चरन् तयैव सह पुनरायाति । अस्मिन् संदर्भे कविः गामनुसरन्ती सुदक्षिणा श्रुति मनुसरन्ती स्मृतिरिवास्तीति वर्णयति । सुदक्षिणा अपांसुलानां धुरिकीर्तनीया । याः स्त्रियः नियमपूर्वक जीवन निर्वाहं कुर्वन्ति तासा मग्रे कीर्तनीयेत्यर्थः । सेय मल पांसुरूमार्ग मनुसरतीति विराधः । धेनोः पवित्र खुरन्यास पवित्र पांसुर्मार्ग इति तस्य निरासः । गोधूल्या पवित्र मार्गे तस्याः गमन मिति विरोधाभास चमत्कृतिः ।

श्रुतिप्रतिपादितानर्थान् स्मृतिर्विवृणोति । अर्थात् श्रुतिं स्मृति रनुगच्छति । अत्र सुदक्षिणाया धेन्वनुसरणं स्मृतेः श्रुत्यनुसरण-सदृशमिति भावः । श्रुति र्वाक् । तदर्थः स्मृतिः । यथा वागर्थाववि-भाज्यौ तथैवेते अपि । वेदप्रतिपादितार्थ मनुसृत्य ऋषिप्रोक्तः शब्दः तथैव तस्मिन्नर्थे प्रवर्तत इत्यवगन्तव्यम् । वेदोक्त धर्माचरण प्रवृत्ता

सुदक्षिणेति स्फूर्तिः । अत्र गौर्वेदमाता । मनुष्येश्वर धर्मपत्नी धर्मशास्त्रार्थस्वरूपिणी अर्थात् स्मृति रिति । अत्रालङ्कारनिर्माण सामर्थ्यातीता कवे रलौकिक प्रतिभा क्रान्तदर्शिता च दर्शनीये भवतः । एव मत्रोपमालङ्कार स्यौचित्य पारम्यं दरीदृश्यते ।

धर्मपत्नी — स्मृतिः — अपांसुला — पवित्रपांसुः इत्यादीन् शब्दान् तत्त च्छब्द शक्तिपरिज्ञान सामर्थ्यतः कविः प्रयुनक्ति । तेषां प्रयोगौचित्यं वयं पुनः पुनर्भावयन्त स्सन्तः कविना वागर्थप्रतिपत्तये प्रथमं या प्रार्थना कृता तस्याः सामञ्जस्य मभिनन्दामः । तत्वतः सुदक्षिणा नियमपालन परायणा अद्य श्रुतिमातर मिय गोमातर मनुसरति । अनेन सादृश्येनात्रस्थानां विशेषणानां च सामर्थ्येण मनुष्येश्वरस्य दिलीपस्य धर्मपत्न्याः व्यक्तित्वं व्यक्तीकरोति कविः । उदात्तेय मुपमा । देवधेनोस्संतति र्नन्दिनी श्रुतिसमेति कथनं गम्भीर भावुकतायानिदर्शनं भवति । गोसेवायाः पारमार्थ्ये श्रद्धा भक्त्योः प्रामुख्यं नन्दिनी माहात्म्यं च सम्यग् ज्ञात्वा पुनः पुनरुपमा समालोचनं कुर्मश्चेत् तदा अस्योपमा सौभाग्यस्य भासमाना रीतिरवगम्यते ।

अतीतानागत स्फूर्ते रत्र भासमानता ध्वने स्समुचितस्थिति प्रकल्पनैव । श्रुतिस्मृत्योः सुदक्षिणा धेन्वोश्च लिङ्गसाम्य मुपमा बाह्यरूपानुगुण मित्ये तन्मात्र मेवन । अपितु यथा सुदक्षिणा धेनू दर्शनीये तथा श्रुतिस्मृती चर्मचक्षुर्भिदर्शनीये न भवतः । ते ज्ञाननेत्रै र्भावनीये एव । ईदृश्येव कल्पनाह्यलौकिकी नाम । उपमानोपमेय भावो भावैकगम्यः आलोचनामृतं भासते ।

राजा सेव्यमानां धेनुं कविः —

> तां देवता पित्रतिथिक्रियार्हां
> मन्वग्ययौ मध्यम लोकपालः।
> वभौ च सा तेन सतां मतेन
> श्रद्धेव साक्षाद्विधिनोपपन्ना ॥        इत्याह—

नन्दिनी देवता पितृतिथि क्रियार्हा। एतादृशीं धेनुं मध्यमलोक पालो दिलीप अनुसरति। सज्जनानुमतेन राज्ञा युक्ता धेनुर्विधिना युक्ता श्रद्धेव विभाति। श्रद्धा धेनू स्त्रीलिङ्गसाम्येन सदृश्यौ भवतः। राज्ञः उपमानं विधिः। सज्जनानुमतिं गतेन विधिना यदा श्रद्धा संयुक्ता भवति तदा सा परिपूर्णतया प्रतिभाति। देव पितृतिथि क्रियाणां श्रद्धा मुख्या भवेत। श्रद्धया धेनो रत्र साम्यं न भौतिक-रूपेण दृश्यते। किंत्वौपम्य मेतत् समुचितं विशिष्टं च विराजते। भावनाबलेनेदृश मलौकिक मुपमा सौभाग्यं रसज्ञाना मानन्दकारि भवति। विधिर्नाम नियमः यदा नियमेन संयुक्ता श्रद्धा तदैव तस्या स्सार्थक्यं भवति।

धेन्वा महिम्ना सह राज्ञ अनुष्ठान परत्वं धेनुप्रयोजनानुकूला उपमा सामग्री च औचित्यं दर्शयित्वा सहृदय हृदयानन्दानुसन्धानं कुरुतः। यदा राजा सायं समये धेन्वा सह वशिष्ठाश्रम मायाति तदा राज्ञी अभिमुखी गच्छति। दृश्यमिदं कवि रूपमालङ्कारेण दर्शयति। यथा—

पुरस्कृता वर्त्मनि पार्थिवेन
प्रत्युद्गता पार्थिव धर्मपत्न्या ।
तदन्तरे सा विरराज धेनुः
दिनक्षपा मध्यगतेव सन्ध्या ॥

पश्चाद्राजा पुरस्ताद्राज्ञी च स्तः । मध्ये धेनुः दिनस्य रात्र्याश्च मध्यगता संध्येव विभातीति कविर्वदति । आगामिनी रात्रिः अतः पुरः स्थिता राज्ञी तादृशीति साम्यं । दिवा तु पश्चात् तस्मात् राज्ञः तत्साम्यं । वर्णेन च धेनु स्संध्या सादृश्यं वहति सा मध्ये राजते । उपासनीयेति स्फूर्तिः । इदं त्वौपमम्यं लौकिक मलौकिकं च भासते । राजा धेनुं पुरस्कृतवान् । राज्ञी तां प्रत्युद्गतवती । उभयोरपि वन्दनं स्वीक्रियते संध्यया । दिनरात्र्यौ मध्यगता संध्या वन्दनीया दिन क्षपा मध्यगतत्वं च संध्या या वन्दनीयत्वे हेतु रिति यदि केचि-द्वावयन्ति तर्ह्यत्रापि अनयो र्दम्पत्यो र्मध्यगतत्वं धेनोर्वन्दनीयता प्राप्तिं ददाति । सहजतया ते द्वे अपि वन्दनीये । संध्या या स्तदृशीस्थितिः प्रकृतिसिद्धैव । तथैव वेद स्वरूपा गौ स्सहजतया वन्दनीया । अत्र राजदम्पत्योः काले धर्मप्रवर्तकत्वेन दिनक्षपारूपत्वं च भावुकता मर्यादायाः परां कोटिमारोहति ।

इत्थं सर्वथा अर्हतमेय मुपमा प्रकृतिपरिशीलने कालिदासवाण्यां महर्षिं वाल्मीकिं ज्ञापयति । भावुकाना मालोचनालोचना न्युन्मील-यति च ।

## दुष्यन्तः

"बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः" इति कालिदास सूत्रधारेण यदुक्तं तत् सर्वदा सर्वथा च सत्यं भवति। सुशिक्षितानामपि स्व सामर्थ्यं प्रति विश्वासो न भवतीति तात्पर्यम्। 'तत् कियत्पर्यन्तम्? आपरितोषाद्विदुषां। अर्थात् यावद्विद्वत्परितोषो लभ्यते तावत्। सोयं विद्वत्परितोषः कालिदासस्य कियताकालेन लभ्यते इत्येषैव कवे श्चरितार्थता नाम।

यथा वाल्मीकि स्तथा कालिदासोपि स्वीय कवितामार्गेण परमधार्मिकं भारतीयं सम्प्रदायं प्रस्फुट मकरोत्। वस्तुतः कालिदास कृतय स्सम्प्रदाय संरक्षणकेन्द्रा एव यदा रसध्वन्यादय अनेके कवितागुणा धर्मैकपरायणा प्रस्फुटा भवन्ति तदैव तेषां सार्थक्यं, शाश्वतत्वं, सार्व जनीनता च सिध्यन्ते। रससिद्ध्या सह एतेषां सर्वतः संसिद्धि कल्पने कालिदासः सिद्धहस्तो ज्ञायते। अथाभिज्ञान-शाकुन्तले कवे र्धर्मदृष्टिः परिशील्यते।

यदा दुष्यन्तः सारङ्गमनुसृत्य तस्मिन् बाणप्रयोगाय समुद्युक्त स्तदा वैखानस आगत्य बाण मुपसंहरेति कथयन्नेव माह "आर्तत्राणाय व श्शस्त्रं न प्रहर्तुमनागसि" इति। भवच्छस्त्र मार्तसंरक्षणार्थ मेव न तु निरपराध संहरणार्थमिति। एष राज धर्मः। अय मेव क्षत्रिय शब्दस्यार्थः। इदमेवोक्तं कविनिबद्ध वक्त्रा दिलीपेन रघुवंशे

यद् "क्षतात् त्रायत इति क्षत्र" इति इदं जगतः सत्यं यत् सदा रक्षणीयं च। अनेन धर्मेण निरुपद्रवं प्रजा जीवनं भवति। इदमेव जगत्कल्याणाधरोहणे प्रथमसोपानं। अतएव यदा राज्ञा अस्त्र मुप-संहृतं तदा राजानं प्रति "पुत्र मेवं गुणोपेतं चक्रवर्तिनमाप्नुहि" इति ऋषेराशीः प्रवृत्ता तादृश धर्मपरिरक्षक एव पालकः प्रजाना मावश्यक। अत आशीरियमुभयतारका भवति।

मृगयार्थ मागत्य कण्वाश्रमे शकुन्तलां दृष्ट्वा तस्या स्सौन्द-र्येण मुग्धः तां गान्धर्वविधिना परिणीय यः स्वगृहं गतः, ततश्च तां विसस्मार, सैवागत्य परिणयवृत्तान्तं स्मारयित्वापि येन तिरस्कृता, तस्य महाराजस्य कथामद्य वयं परामृशामः। अप्ययं धर्मः? किमिदं कार्यं युक्तं भवति? किमयं राजा युक्तायुक्त परिज्ञाता उत वा अना-लोचित शीघ्रकारी वेत्येतेषां पूर्वपक्षाणां सिद्धान्तः करणीयः।

वनज्योत्स्नां सेचयन्तीं शकुन्तलां दृष्ट्वा राजा अपि नाम कुलपते रियं मसवर्ण क्षेत्र सम्भवास्यात्। इति सन्दिह्य ततः "अथवा कृतं सन्देहेने"ति स्वान्तःकरणप्रवृत्तिं भावयति। कुत इति चेत् सतां सन्देहपदेषु वस्तुषु अन्तःकरण प्रवृत्तय एव प्रमाण मिति निष्कर्षः। तस्यायं निर्णयः।—— आर्यं मे मनः अस्या मभिलाषीति यत् तदेव तस्य निर्णये मापकं भवति। राज्ञस्तु मनः आर्यमेवेति सिद्धम्। स एव तस्यात्मविश्वासः। इदं वाक्यं न परेभ्यः प्रकटितम्। किन्तु आत्मगतमेव। अत एवास्य याथार्थ्यं ज्ञापयति। अद्य सन्देह

उत्पन्नः । निर्णयाय स्वहृदयमेव प्रमाणम् । तच्चार्यमित्येतन्निस्संशयं च । आत्मसंशुद्धि रात्मनि समीक्षितां अत्र विराजते । यदा आर्य-धर्मयुक्तं दुष्यन्तचित्तं मुनिकन्याया मभिलाष्यभवत् तदैव तस्याः क्षत्र परिग्रह क्षमत्वं च व्यक्त मभवत् । कथायानिजस्थिति मनुसृत्यास्माक मत्र राज्ञ अन्तःकरणप्रवृत्तेः प्रामाण्यं निर्विवादतया अङ्गीकर्तव्य मिति नास्ति द्वितीयः पक्षः । अतो मुनिकन्यकेयं कुलपते स्सवर्णा क्षेत्र सम्भवैव । ईदृशी विवेचना स्वादा वेव कृता । राज्ञेति जानन्तो वयं राज्ञ अनन्तर प्रवृत्तिं प्रत्यपि सावधानतया सानुभूत्या च परिशील-यामः । धर्ममये आर्यं दुष्यन्त चित्ते धर्मेतर भावनायाः स्थानं नास्ती त्येतदुक्तं भवति । दुष्यन्तस्य मनोधर्मः परमधार्मिक एवेति निर्णयं अत्र लभ्यते । इत्थ मालोच्यैव राजा धार्मिकः स्वस्य तस्या श्चार्हता-निर्णयानन्तरमेव शकुन्तला विषये पुरोगामी बभूव । अतो ज्ञायते राज्ञः कृत्य मिद मत्र नाऽनालोचितं प्रवृत्त मिति ।

अनेन निश्चित ज्ञानेनान्तर कथागमन मवगमामः । राज-वचनमिदम् —

असंशयं क्षत्रपरिग्रहक्षमा
यदार्य मस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु
प्रमाण मन्तःकरणप्रवृत्तयः ॥

इत्येवं राजा सत्पुरुष एव । नात्र सन्देहः । तथापि राजा "तस्वत

एनामुपलप्स्ये" इति पुनः स्वीयविचक्षणज्ञानं जागरूकतां च प्रकटयति। तत अनसूयामुखतः शकुन्तलायाः मुने रसवर्णक्षेत्र सम्भवत्वं ज्ञात मासीत्। अथापि किं तस्याः परिणये अभिलाषोऽस्ति? अथवा धर्माचरणे कांक्षा विद्यते इति ज्ञातु मिच्छति। अनसूया— "शाकुन्तलायास्तु धर्माचरणे पारवश्य मस्ति तथापि कण्वस्तुता मनुरूपाय वराय दातु मेवेच्छतीति कथयति। इत्थं विदित शकुन्तला सर्ववृत्तान्तो दुष्यन्त स्तदनन्तरमेव "भव हृदय साभिलाष" मिति स्वहृदयाय कथयति। अपिच "आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्न" मिति हृदय माश्वासयति। एवं सर्वविषय परिशीलनानन्तरं यदन्तःकरण प्रामाण्यं तेनादा वङ्गीकृतं तस्यौचित्यं याथार्थ्यं च जानन्तो मयं न दुष्यन्ते धर्मेतरां प्रवृत्ति शङ्कितु शक्नुमः।

इत्थं समग्र पर्यालोचनानन्तरं यो गांधर्वविवाहः प्रवृत्तः, त महर्षिः कण्वः "दिष्ट्या धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता मत्वा शकुन्तला मुद्दिश्य "वत्से! सुशिष्यपरिदत्ता विद्येवा-सोचनीया संवृत्ता" इति वदति। अनया कण्वाङ्कृत्या ज्ञायते यच्छकुन्तलादुष्यन्तयोः स्सम्बन्धः पवित्र एवेति। यज्ञसमये यजमान आहुतिमग्नौ निक्षिपति। अत्रान्तरे सोऽभवद्धूमाकुलित दृष्टिः। तथाप्याहुतिस्तु अग्नावेव पतित इत्यनेन यादृशाय वराय दातुं ऋष-वाँछति तादृशायैव सा स्वयं दत्ता। उभयोरपि परस्पराहिता च भासते इति च ज्ञायते। सुशिष्य परिदत्तेव विद्या अशोचनीया शकुन्तला संवृत्तेति तेन च भवितं। किन्तु विधिवशेन क्रूरयेन कश्चित्कालं सा

शोचनीयैवाभवत् । तथापि नात्र शकुन्तलाया राज्ञो वा अकृत्यं दृश्यत इत्येष अहो विधिविलासः । विद्यया यदत्रोपमानं कृतं तत्कवेः पारदर्शक लौकिक ज्ञानं गुरुहृदयनिवृत्तिं च साधारतया ज्ञापयतीति विवेकः । कण्वस्य भाविकाल परिज्ञानं ऋषित्वेपि तस्य दम्पत्योरनुराग पवित्रता विशेष विज्ञानं मानसिक सांसारिकहृदय-रहस्यावगाहश्चास्माभि र्ज्ञायन्ते तस्यैव वाक्येन, पुनस्तस्याः पतिगृह-प्रयाणसमये यत्तेनोक्त माशीरूपेणेति विचित्र मेतत् ।

तस्याशीरेवं प्रावर्तत ।—

> ययाते रिव शर्मिष्ठा भर्तु र्बहुमता भव।
> सुतं त्व मपि सम्राजं सेव पूरु मवाप्नुहि ॥ इति ।

ययातेः शर्मिष्ठायां यावती प्रीतिः तावत्येव त्वय्यपि दुष्यन्तस्य प्रीति र्भूयादिति कण्वस्याशीरूपा शुभाशंसा । यथा ययाते रनुरागपात्रं भूत्वा शर्मिष्ठा पुत्रं चक्रवर्तिनं पूरुमवाप तथैव त्वमपि दुष्यन्तानुराग-पात्रं भूता चक्रवर्तिनं पुत्र मवाप्नुहीति भावना । ययातिवंशीयोः राजा दुष्यन्तः पुत्रं भरतं पूरुसदृशं प्राप्नुयादिति मतिः । वंशप्रतिष्ठाकारिणं पुत्रं प्राप्नुहीत्यस्यमाशिष महर्षेर्गम्भीरा भावना या कविकुलतिलकेन निष्पादिता सेयं भावुकानां सहृदयानां रसज्ञता तत्वज्ञतयो स्समुचितां कविता सम्पत्तिं ततश्च हृदयाह्लादकत्वं च ददातीति रम्यं पवित्र मेतत् । कालिदासोपमाया वैशिष्ट्यं चानेन ज्ञायते । यथा—

अत्र धर्मः परिशीलनीयः तदनुसारेण उपमाया औचित्य महत्वं च भावनीये भावुक सामाजिकैः । देवयानी ययाति पत्नी तस्या दासी शर्मिष्ठा । किन्तु सा राजपुत्री । देवयानी तु ब्राह्मणपुत्री-ति तत्वं विज्ञाय ततो दुष्यन्त वाक्यं स्मरणीयं यत्

"परिग्रहबहुत्वेपि द्वे प्रतिष्ठे कुलस्य मे ।
समुद्रवसना चोर्वी सखी च युवयोरियम् ।। इति ।

कथापरिज्ञाने नास्माभिर्ज्ञातमेव यद् दुष्यन्तस्य पत्नी वसुमती नाम शकुन्तला परिणयात्पूर्वमेव काचन राज्ञीत्व मापन्ना स्थितैवेति यथा ययाते र्देवयानी । तथापि यथा ययाते श्शर्मिष्ठाया स्सौन्दर्य सौमन-स्यादि विशिष्टगुणानुशीलने तत्कालीन परिस्थिति प्राबल्येन च शर्मिष्ठा परिग्रहो बभूव तथैवात्रापि शकुन्तलादुष्यन्त सम्बन्धोपीति तत्वमिदमवगन्तव्यं । उभयो रपि कथयो स्साम्यं पौर्वापर्य विशेषणै-स्सह सम्पूर्णावगाहनेन वयं जानीम स्सूक्ष्मं धर्मं यस्तु हठाद्दर्शने अधर्मत याऽव भासते । तत्वावगाहे च धर्मसूक्ष्मतापरिज्ञाने अद्भुत मिदं साम्य मुत्तमोत्तम मुचिततमं च भासते । ईदृश्यैव कवेः कालि-दासस्यानन्य साधारणा प्रतिभा कवितायां दरीदृश्यते ।

ययातिस्तु देवयानी मुपयेमे । तस्य बहुमता शर्मिष्ठाकिल । कोयं धर्मः ? कीदृशो वा ? इति प्रश्न स्सञ्जायते । यद्ययमधर्मः अधार्मिक कथानायिका काचिदिव त्वमपि ते भर्तु र्बहुमता भवेत्या-शिषं कथं महर्षि र्ददाति ?

अस्तु नाम यथा कथं वेत्ययं नीरसवादः। ता वेतावपि दम्पती अधार्मिका वेवेति कथनं कुव्याख्यानं भवति। धार्मिकप्रवृत्ते रधार्मिकीकरणं भवति। वक्रोयं मार्गः। देशकालानुसारेण बुद्धिविलासो लास्यते खलु।

अकृत्वा धर्मभ्रंशं पितरं च सुखिनं यौवन सम्पन्नं कृत्वा तत्र पूरूरभूच्चक्रवर्ती। तथैव तद्वंशीयो भरतः सम्राड् बभूव। पुनर्धर्मभङ्गं न कुर्वन् दुष्यन्तः पौरवः स्ववचनानुसारेण शाकुन्तलं पुत्रं सम्राजं चकार। स अधर्मं न करोति। न चकार च। धर्माचरणे यान्यन्तराय तिमिराणि दृष्टानि तान्यपाचकार, अधिजगाम च स्वीयं दुःखं। सुखं ददौ चान्ते शकुन्तलायाः। जगत्प्रसिद्धं पुत्रं भरतं समर्थं प्रभुं प्रजाभ्यः प्रादादिति विशेषः। नेदं कथ्यते केवल कथापरिणाम मनुसृत्य। किन्तु धर्मपरिरक्षणे यद् हृदय मथन मभवत् दुष्यन्तस्य तदत्रानुसन्धेयम्। महाभारते यस्त्वदृष्टो दुर्वास सः शापवृत्तान्तः सोयमत्र कालिदासेन कल्पितः कथानायकस्य धीरोदात्ततां परिरक्षितु मिति प्रथा काचिदस्ति (पद्मपुराणगाथायामयं दृश्यते। तत्त थास्तां) मनोनामकं किञ्चिदस्ति वस्तु। तस्य प्रवर्तनं तत्वं च परिशीलयन्ति बहवो महानुभावाःआधुनिके काले। मनः परिशोधन प्रकटनपरायणः कविः सर्वदा सार्वकालिकः सार्व जनीनश्च भवतीति तथ्यमेतत्। अत एवाद्यापि कवीनां गणना प्रसङ्गे कनिष्ठिकाया अधिष्ठित कालिदासत्वम्।

दुष्यन्तस्य हृदयमथनं परिशीलयामः।

राजा हंसपदिकाया (स्सङ्गीतं) गानं शुश्राव आत्मना विज्ञाते कस्मिंश्चिद्विषये तया स अधिक्षिप्यते इत्येवं तेन भावितम् । एताव-त्तेनावगतम् । ततोप्यधिको गम्भीरः कश्चन वृत्तान्तः य अद्यात्मन अन्तरङ्गे कुलाप्यधस्तले आच्छादित अविज्ञा यमानो वर्तते । तच्छा-यारूपा स्मृतिः, वस्तुतस्तु या स्मृतिस्तेन न विद्यते स ं ं : ं । र्वान्त्यानि किरणानि प्रसारयति । कि मिदमिति न ज्ञायते । आन्तर मिदं जगत् किमात्मनः सम्बन्धि ? उताहो बाह्य प्रस्फुरन् कश्चन वृत्तान्त एवान्यापदेशेन कथ्यते ? इत्येवं संशयस्थान मभवत् ।

"कमलवसतिमात्र निवृतो मधुकर विस्मृतोस्येनां कथ" मित्यनेन किमुद्दिष्टं ? अस्य जनस्य मया सकृत्कृतप्रणयत्वात् मधुकरा-पदेशेन मामेवाधिक्षिपतीति राज्ञः आशयः । तथा नानेन विज्ञातमाले-णाशयेन तृप्तो भवति राजा । अन्यत किमप्यस्त्यन्तरे यत् स्पष्टरूप-तया न विज्ञायते इति च भावयति । अतएवास्यायं समन्वयः ।

यथा —

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकी भवति यत्सुखितोपि जन्तुः ।
तच्चेतसा स्मरति नून मबोधपूर्वं
भावस्थिराणि जननान्तर सौहृदानि ॥ इति ।

राजा इदमबोधपूर्वं जननान्तर सौहृदमिति भावयति । अद्यात्मानं सुखिनं च भावयति । अत्र कमलवसतिमात्र निर्वृतत्वं नामात्मनः हंसपदिकया

मह मकुरक्ऋत णयत्वमेव राज्ञः स्मृतिपथं प्राप्तम् । न तु शकुन्तला-वृत्तान्त यः शापेनान्तरितः । अत एव तस्येदृशी भावना । अत्र-त्वधा दुष्यन्तालोचना धर्माधर्मयो निर्णयार्थं प्रयतते भाविनि कथाभागे यदा शकुन्तलाऽऽगमनेन यद् भावजात मुत्पन्नं राजान मन्मथयत् तस्य सर्वस्यापि विस्तारो नाम धर्म परिशीलन कार्यक्रम एवेति विस्पष्टम् ।

दुष्यन्तः स्वसुखनिरभिलाषस्सन् लोकहेतोः खिद्यते । तस्य प्रतिदिनं वृत्तरेवंविधैव । यथा पादपस्तीव्र मुष्णं मूर्ध्ना अनुभवति, संश्रितानां परितापं छायया शमयति, तथैव । मुनिशिष्यानीतां शकुन्तलां दृष्ट्वा सा पाण्डुपत्राणां मध्ये किसलय मिव भासत इति भावयति । किन्तु झडित्येव "अवर्णनीयं परकलत्र" मिति वदति । इय मेव तस्य धर्मनिरतिः । "इयं ते भार्या खलु इमां स्वीकुरु" इति मुनिकुमारवचनं । गुरोश्च सन्देशः श्रावितः । राजा "किञ्चात्र भवती मया परिणीतपूर्वा" इति पृच्छति ।

शार्ङ्गरवस्तु — किं कृतकार्यद्वेषः ? धर्मं प्रति विमुखता ? कृतावज्ञा? इति पप्रच्छ ।

अपिच "मूर्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु" इति वदति "विशेषे-णाधिक्षितोस्मी"ति राज्ञो विनय प्रकटनं दृश्यते । किन्तु

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्नवेति व्यवस्यन् ।

भ्रमर इव विभाते कुन्द मन्तस्तुषारम्
नच खलु परिभोक्तुं नैव शक्नोमि हातुम् ॥

इति स्वीय जीवन विशेषं धर्मानुबन्धिनं कर्तुं द्वैधीभावे पतति अत्रैव प्रतीहार्या "अहो धर्मापेक्षिता भर्तुः" इति सम्भाव्यते राजा "तदेषा भवतः कान्ता त्यजवैनां गृहाणवा" इत्युक्त्वा ते प्रस्थिताः । "दार त्यागी भवाम्याहो परस्त्रीस्पर्श पांसुलः" इति राज्ञास्तु धर्मसंशयो वर्तत एव । इयमेव तस्य मानसिकी व्यथा । सर्व मिदं धर्मच्युते रात्मानं राज्यं च रक्षितु मेव राज्ञः चिन्तितम् । कथमिदं निश्चीयते ? दुर्वाससश्शापकल्पनाद्वारेण महा कविना कल्पित मिदं राज्ञो हृदय-मथनं धर्मरक्षणाय व्यवस्यतो राज्ञः कथायां कल्पनाशिल्पपराकाष्ठां परिस्पृशति ।

ततश्चांगुलीयकं लब्धं । कथा स्मृतिपथे विरराज । अस्वीकर-णेन शकुन्तलाया, राजा दारत्यागी भूत्वा दुःखमनुभवति । सा चान्तर्वत्नी । न ज्ञायते तस्याः किं मभवदिति ।

समुद्रव्यापारी धनमित्रो नाम वणिग्वर एकः नौकाव्यसने विपन्नः राजगामी भवति तस्यार्थसञ्चय इति मन्त्रिणा लिखितम् । किमयं पुत्रवान् ? अथवाऽस्य पत्नी आपन्नसत्वा भवति ? इत्येतान् विशेषान ज्ञातु मिच्छन्नपि राजा 'किमनेन सन्तति रस्ति नास्तीति विचारणेन इत्युक्त्वा इत्थमाज्ञापयति—

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥ इति

अनेन दुष्यन्तस्य धर्मपरायणत्व मार्द्रहृदयता च ज्ञायते। एवमेव कालिदासस्य दिलीपोप्यपालयदिति ज्ञायते। यथा—

प्रजानां विनयाधाना द्रक्षणाद्भरणादपि।
स पिता पितर स्तासां केवलं जन्महेतवः॥ इति।

यस्यां कस्यामपि व्यवस्थायां प्रजाभिर्वांछनीयं राज्ञः अथवा पालकस्य यस्य कस्यापि ईदृशं धर्मपरायणत्व मेवेत्यत्र न विप्रतिपत्तिः।

इत्थं कालिदासस्य धर्मदृष्टि स्तस्य कृतिषु सर्वत्र कविप्रौढोक्त्या कवि निबद्धवक्तृप्रौढोक्त्या वा दृश्यत एवेत्यस्य तत्कृतय एव प्रमाणं। वस्त्वाश्रयणं तदाश्रित भिन्नभिन्न रस सिद्धि प्रदर्शनं वा धर्मस्य भारतीयस्य सर्वोत्कृष्टता प्रकटनार्थमेव क्रियमाणं विराजते अस्माकं महाकवीनां मधुरेषु पवित्रेषु च वचनेष्विति स्पष्टम्।

अत एव कालिदास कृतयः "काव्यालापांश्चवर्जये" दित्यादि वचनस्य लक्ष्य प्राया न भवंति। अपितु कान्तासम्मिततया रसास्वादन साधनी भूता धर्मप्रख्यापका भवन्तीति विज्ञेय मस्माभि:। अनयैव दृष्ट्या भारतीय प्राचीन सारस्वत पठन पाठन परिपाटीं यदि वयं पुनरुद्धर्तु मुद्युक्ता भवेम तदा तस्य सारस्वतस्य चरितार्थता अस्माकंच सुश लता ल भ्यतः।

ग्रंथाना मेतेषा मुपयोगः न केवलं भाषाध्ययनायैव किन्तु पुनर्भारते वर्षे प्राचीन धर्म नर्वीनं कृत्वा विश्वशांतये विश्वकल्याणायच विनियोक्तव्यः।

=)o(=

## ५. शाकुन्तले पञ्चमाङ्क प्रधानता

काव्येषु नाटकं रम्यं नाटकेषु शकुन्तला ।
तस्मिन्नपि चतुर्थाङ्क स्तत्र श्लोकचतुष्टयम् ॥

इति काचन सूक्तिःप्रथिता । अनया शाकुंतले चतुर्थोंकःरम्मः इति, तत्रापि चत्वारःश्लोका रम्यतरा इति तद्ज्ञा भावयंति । किन्तु कथा कल्पनाशिल्पविषये रसास्वादनशक्त्यां ध्वनिनिक्षेपण प्रज्ञायां वा कालिदास शाकुंतलस्य पंचमांक एव प्राणप्राय इति परिशीलनेन परिज्ञायते । अभिज्ञान प्रधानतया प्रवर्तितायां कथाया मादौ कालिदासः शकुन्तलायै अंगुलीयक माभिज्ञानत्वेन दत्तमिति नाऽप्रकटयत् ।

षष्ठेंऽके विदूषकः "भोः इयं नाम मुद्रा केनोद्धातेन तत्र भवत्या हस्ताभ्यासं प्रापिता ?" इति राजान मपृच्छत राजाचावोचत्- "श्रूयतां, स्वनगराय प्रस्थितं मां प्रिया सबाष्पमाह -"कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यती" ति पश्चादि मां मुद्रां तदंगुलौ निवेशयता मया प्रत्यभिहिता ।

एकैक मत्र दिवसे दिवसे मदीय
नामाक्षरं गणय गच्छति यावदंतम् ।
तावत्प्रिये मदवरोधगृह प्रवेशं
नेता जनस्तव समीप मुपैष्यतीति ॥इत्यादि॥

राजा स्वपाणिग्रहणं विस्मरिष्यतीति तदा तं ज्ञापयितु मंगुलीयकमिद मुपयोक्ष्यतीति च कथं शकुन्तलया परिज्ञातं भवेत् ? अनसूया-प्रियंवदाभ्यान्तु ज्ञातमिदम् । गमन समये ते तद्विषयकां प्रसक्त मकुरुताम् । शकुन्तला चकिता बभूव । न किञ्चिदत्र भेत्तव्यमस्ति । स्नेहेनेदमुच्यते । यद्यावश्यकं भवति तर्हि दर्शयेद मंगुलीयक मित्यूचतुः ।

पञ्चमाङ्के तस्योपस्थिति रावश्यकी बभूव । किन्तु नष्टं तत् । शकुन्तला अंगुलीयकं दर्शयितुं नाशक्नोत् । राजा तु दुर्वाससः शापेनोपहतत्वात् न सस्मार । कथाया मादौ या अभिज्ञान प्रसक्तिः सा नायिका नायकै रज्ञाता कथावसान पर्यन्तं स्थिता । कथाया भाविगमनं प्रति सन्देहः पञ्चमाङ्के समारब्धः । सन्देहोऽयं कथाव-सानपर्यन्तं स्थितः । कथाया मुत्पन्ना या स्समस्यायाः परिष्कारस्वरूप मभिज्ञानदर्शनं दुष्यन्तस्य षष्ठेऽङ्के अभवत् । किन्तु तत् केवलं विप्रलम्भ शृङ्गारायापचकार । अनभिज्ञात परिष्कारत्वात्तत्रापि सन्देह एव प्रावर्तत । अयं ग्रन्थिः सप्तमाङ्क एव विस्रसितः ।

पञ्चमाङ्कः सामाजिकेषु सञ्चलनमजनयत् । नायिकानायकयो श्चित्तशुद्धि स्समप्रधानतया प्रदर्शिता । यदि पञ्चमाङ्क एवं न निर्वाहित स्तदा तदनन्तर कथा प्रदर्शनावकाश एव न भवेत् । नायक विप्रलम्भ व्यक्तीकरणाय शृङ्गाराङ्गतयापि वीररसपोषणाय वा नाव-काशोऽभविष्यत् । आदित आरभ्य चतुर्णामङ्कानामन्तपर्यन्तं सामान्य

तया चलितायाः कथायाः प्रत्येकतां प्रकल्प्य प्राणप्रतिष्ठा पञ्चमाङ्के एव कृता ।

शकुन्तलां गान्धर्वेण विधिनोद्वाह्य अज्ञानभिज्ञ इव प्रवर्तयतो नायकस्योदात्ततायाः भङ्गकारीवा भात्ययं घट्टः । महाभारत कथाया विषयोय मेता वानेव । अतः कविः कथामिमां स्वीकृत्य आत्मनो भावुकतां गम्भीरतां च प्रदर्श्य सुनिशिते विषऽयेस्मिन् यथा न कस्यापि दोषो भवति तथा रङ्गस्थलायानीय शापदोषाय स्वप्रभाव प्रदर्शनावकाश कल्पयित्वा मनसः अन्तरान्तरेषु पात्राणि सामाजिकांश्च प्रेषयित्वा परिशीलयितु यत्नं चकार । मनसो बाह्याभ्यन्तर भागयो र्व्यवहारायानुकूल सन्निवेशानां कल्पनाभिः अङ्कनिर्माणकर्ता कालिदासः कथाप्राणं पञ्चमाङ्के निचिक्षिपे इत्येतद्गमनार्हम् ।

राजा स्वयं कन्या मुद्वाह्य ततो यदा सा स्व सकाशमागता तदा नाहं जानामीति कथयति । अयमेव पञ्चमाङ्क वृत्तान्तः । सम्भाषण कल्पनायां, नायकोदात्तताव्यञ्जनायां मनस्तत्वस्य विश्लेषणे च कवेः प्रतिभाविशेष अत्र प्रकटितः । राजनीति र्लोकनीति श्चोचितं स्मरणीयतया प्रकटिते भवतः । पञ्चमाङ्क प्रारम्भे – "भो वयस्य ! सङ्गीतशालान्तरे अवधानं देहि" इति हंसपदिकागाने दत्तावधानं राजानं करोति विदूषकः । राजा स्वोपालम्भ एव स इत्युक्त्वा "निपुण मुपालब्धोऽस्मी"ति हंसपदिकां कथयेति तं प्रेषयति । विदूषक एवं शकुन्तलाया आगमन समये तत्र नोपस्थितः, वस्तुतो यस्योपस्थिति रावश्यकी । शापपिहित स्मृते र्दुष्यन्तस्य यथावसरं विदित

शकुन्तला वृत्तान्तस्य विदूषकस्य समीपानवस्थितिरूपा कल्पना कृता कविना। सैव निपुणता नाम कथानिर्माणशिल्पे। शापेनेत्थं प्रभावितो राज्ञः परिसरः। तत्तथास्ताम्। प्रकृते अङ्कप्रारम्भे या गीतिः श्रुता सेवमस्ति।

अभिनवमधुलोलुपस्त्वं तथा परिचुम्ब्य चूतमंजरीम्।
कमल वसति मात्र निर्वृतो मधुकर, विस्मृतो स्येनां
कथम्॥ इति

हंसपदिकया अत्र मधुप उपालब्धः येन राज्ञः उपालम्भो ध्वन्यते। यश्च राज्ञा तया च विदितः। अत्र राज्ञः परिज्ञानं हंसपदिका हृद्गत व्यंग्यावगमने पर्यवसन्नम् यदवगमनेनात्मानं विज्ञं मन्यमानः सोऽवदन्निपुणमुपालब्धोऽस्मीति। अत्रान्ययावाण्या या हंसपदिकयाप्यज्ञाता राजा निपुणतर मुपालब्धः यद्विज्ञाने स अज्ञ एव तत्काले। निमर्माणमर्मनिक्षेपण निपुणतमः कालिदासः व्यंग्ये व्यंग्यान्तरं निक्षिप्य तन्मर्मज्ञान् भावुकान् ज्ञापयति यद् राज्ञा न ज्ञायते यच्च विस्मृति स्मृत्योः परस्पर सङ्घर्षरूपे पञ्चमाङ्के विवृणोतु काम आदावेव तदनुकूलमिमं सन्निवेश मकल्पयत यत्प्रभावो दुष्यन्तहृदये रम्याणिवीक्ष्येत्यादिना पर्युत्सुकत्व मजनयश्च जन्मन्यस्मिन्ननुभूत इव भासमानतया तत् जननांतर सौहृदमेव वक्तव्यम्। तस्य लोके अनुभूति विषयत्वाच्च।

एकदा इतरकुसुमविशिष्टां चूतमंजरीं परिचुम्ब्य इत्यनेन

हंसपदिकायां सकृत्कृतप्रणयस्य राज्ञः कमल वसति नाम शुद्धान्त-प्राप्तिर्लब्धा । यतः पूर्वः प्रणयो विस्मृतः अनेन । कारणं च तस्य अभिनवमधुलोलुपत्वमेवेति साधारणाधिषणा शाकुन्तला वृत्तान्त स्पूर्ति रपि प्रस्फुटैवात । किन्तु स राज्ञः अगोचरः । तस्मादेव तस्य पर्युत्सुकत्वम् । शापस्तु ज्ञातवृत्तान्तस्य अथवा प्रियजनस्य स्मृतिमालं पिहितं करोति । अतोत राज्ञा दशा प्रमत्तैव । स्मृत्यभ्यन्तरनिहितां कथां स वित्यस्मार । स्मृतिस्तु तां न प्रकटीकरोति । आतङ्कविरहितां स्वच्छां पवित्रां च स्मृतिप्रज्ञां शकुन्तला धारयति । अत स्तस्या प्रज्ञायां राजा वञ्चक येव भासते । शाकुन्तलायां तस्तंवन्धिनां विश्वास अनुभवसिद्ध एव । राजपरिजनस्य त्वयं सन्निवेशो विलक्षणतया दृश्यते । ईदृशानां विभिन्नमनोभावानां विचित्र सन्निवेशेनाय ङ्क आरभ्यते ।

दुष्यन्त स्वभावे परामर्शिते इदं ज्ञायते —

सः स्वसुखनिरभिलाषस्सन् लोक हेतोः खिद्यते । आत्तदण्डस्सन् विमार्गप्रस्थितान् नियमयति । विवादं प्रशमयित्वा रक्षां करोति । ज्ञ तिभ्योप्यधिकतरं बन्धुत्वं दुष्यन्त एव परिसमाप्तम् । वैतालिकोक्ति रूपा मिमां दुष्यन्त स्वभाव व्याख्यां कालिदासकृतां मनसि कृत्वैव सामाजिकैः पञ्चमाङ्क परिज्ञाने यत्नः कार्यः ।

ऋषिप्रेषणे काश्यपस्योद्देशं भावयन् राजा आरूढबहुप्रतर्कं मनसा हेतुसंचिंतनं चकार । धर्मारण्य चरेषु प्राणिषु विषये किं वा केन

चिदसच्चेष्टित मित्यप्येकः संदेह स्तेन कृतः। अर्थात् तमसहमानस्सः। अपिच तन्नवारणार्थ मात्मानं जानाति। ईदृशः स्वयं कथं धर्मारण्य चारिणि प्राणिन्यपचारं करोति? पुनश्च राजा स्वापचरितै राश्रम वीरुधां प्रसव आहोस्विद्विष्टम्भित इति शङ्कते सर्वमिद मेवं राज्ञो हृदयस्य विशुद्धिमतां ज्ञापयति, यन्निर्माणकुशलं ध्वनिवैभवं प्रत्याकर्ष-यति सामाजिकानां ज्ञाननेत्राणि कालिदासः कथासंविधानकुशली कविर्मध्यस्तो भूत्वा "स्वभाव एवैष परोपकारिणा" मिति शार्ङ्गरव मुखेन कथयति। तपोघनमध्ये शाकुन्तला मवगुण्ठनवतीं नातिपरिस्फुट शरीरलावण्यां स्वसमीपागतां दृष्ट्वा पाण्डुपत्राणां मध्ये किसलयमिव केय मिति भावयति। इयं तस्य रसज्ञता। किन्तु दर्शनीयायामपि तस्यां अनिर्वर्णनीयं परकलत्रमिति तद्वर्णन वैमुख्यं दर्शयति।

"कुतो धर्मक्रियाविघ्नः सतां रक्षितरित्वयि" इत्यादिना ऋषी-णामपि राज्ञो धर्मरक्षकत्वे न शङ्का परिदृश्यते। गुरु सन्देशं गुरुसमः शार्ङ्गरवः गुरोरनुग्रहं समर्थयन् स्वतन्त्रयावाण्या विवृणोति।

तदित्थं दृश्यते —

गुरुणा संदिष्टः — शार्ङ्गरव! इति त्वया मद्वचनाद्राजा शकुन्तलां पुरस्कृत्य वक्तव्यः।

> अस्मान् साधु विचिन्त्य संयम धनानुच्चैः कुलं चात्मनः
> त्वय्यस्याः कथमप्य बान्धवकृतां स्नेहप्रवृत्तिं च ताम्।

सामान्य प्रतिपत्ति पूर्वकमियं दारेषु दृश्यात्वया
भाग्यायत्त मतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥

उपर्युक्तं गुरूपदेशं गुरुसमो गुरुशिष्यः शार्ङ्गरवः दुष्यन्तायेत्थ मकथ-यत् । "यन्मिथस्समयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयो रनुज्ञातम् । कुतः ?—

त्वमर्हतां प्राग्रसरः स्मृतोसि यत्
शकुन्तला मूर्तिमती च सत्क्रिया ।
समानयंस्तुल्य गुणं वधूवरम् ।
चिरस्य वाच्यं न गतः प्रजापतिः ॥

तदिदानी मापन्नसत्वा प्रतिगृह्यतां सहधर्माचरणायेति ।

अत्र गुरुसमेन गुरुशिष्येण शार्ङ्गरवेण स्वगुरु सन्दिष्टं स्वीयया स्वतन्त्रया वाण्या भावानुकूलं राज्ञे समर्पितम् । सामान्यप्रतिपत्ति पूर्वक मित्यस्य केचित् सा मान्यप्रतिपत्ति पूवकमिति पदविभागेन ध्वनिविशेषं सूचयन्ति । किन्तु भाग्यायत्त मतः पर मित्यादिना गुरो र्धार्मिक सन्देशं वयं लोकज्ञता प्रकाशकं च जानीमः । "मिथः समया दिमा" मित्यादिना गुरुवाक्यत्वेन कथितेन शिष्यवाक्येन गुरो रौन्नत्यं विशिष्टतां च वयं जानीमः । 'त्वमर्हता' मित्यादि श्लोकस्य भावस्तु गुरुभावेन न विरुध्यते । किन्तु विवृणोति गुरोर्भावम् । तथैव वक्तस्यापि विशिष्टस्यान्यविषयस्य उक्ति वैचित्र्ययुक्तया भावप्रकटन-

वैखर्या शिष्यस्य स्वतन्त्रतां लोकज्ञता माविष्करोति तदीयं वचन जातम् । एवं राज्ञः ऋषीणां च प्रत्येकता प्रकृष्टता चात्र ज्ञायेते ।

राजा तु ऋषिकथितं शकुन्तलोपयमवृत्तान्तं स्मर्तु मशक्नुवन् इत्थ मचिन्तयत् —

> इदमुपनत मेवं रूप मक्लिष्टकान्ति
> प्रथम परिगृहीतं स्यान्नवेति व्यवस्यान् ।
> भ्रमर इव विभाते कुन्द मन्त स्तुषारम् ।
> न च खलु परिभोक्तुं नैव शक्नोमि हातुम् ॥ इति

हंसपदिकापदिष्टो भ्रमरः अत्र क्लेश मनुभवति । किन्तु शकुन्तला अक्लिष्टकान्ति रेव । स्मृतिपथस्यान्तरान्तरेषु राज्ञो बुद्धिः प्रवेष्टुं न शक्नोति । अत एव विभाते अन्तस्तुषारः कुन्द इव सा तद्बुद्ध्यां भासते । तुषाररूपेणात्र विस्मृति र्विजयते । स्वभावोत्तान हृदयता च शकुन्तलायाः न प्रत्याख्यातव्या पौरवेण । पवित्र हृदयद्वयस्यात्र सत्यसंरक्षणे सङ्घर्षः कृतः । विस्मृत्युपहत त्वाद्राज्ञः "कथमिमा मभिव्यक्त सत्वलक्षणां प्रत्यात्मानं क्षेत्रिण माशङ्कमानः प्रतिपत्स्ये" इति शङ्का युक्ततमैव । निर्णेतु मशक्यत्वात्सत्यस्य मध्यस्थ कथन मपि युक्त मेव यत् "आत्मकृतं चापलं अप्रतिहत मात्मानं दहती"ति ।

अतः परीक्ष्य कर्तव्यं विशेषात्सङ्गतं रहः ।
अज्ञात हृदयेष्वेवं वैरीभवति सौहृद ।। मिति च

इयं सार्वकालिकी लोकनीतिः सर्वैरपि परिचिन्तनीया ।

शकुन्तला राज्ञ स्सन्देह मभिज्ञाने नापनेतु मिच्छति । किन्त्वत्र विधिना प्रभुत्वं दर्शितम् । अतोऽन्यद्वृत्तोवृत्त मभिज्ञान रूपतया विवृणोतुं यतति सा । सोपि यत्नः व्यर्थस्समभवत् । अनितर गति स्सा किं करिष्यति ? राजा तु – "दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः" इति संशयति । पुरोहित स्तात्कालिकीं परिष्कृतं सूचयति । अतो राजपरिजनस्यापि राजवाक्येषु न निश्चिता बुद्धिरिति ज्ञायते । किन्त्वद्भुतं ज्योतिरेकमेना माक्षिप्य तिरोभूतम् । यदा पर्याकुलस्य राज्ञः मनसि मुनितनया परिग्रहस्मृति र्नोद्भूता, हृदयं बलवत्तु दूयमानं प्रत्याययतीव तदा सामाजिकान् भाविकथादर्शनोत्सुकान् कुर्वन् पञ्चमाङ्कः परिसमाप्तः ।

—X—

## ६. मेघदूतेऽपि कालिदासस्याध्यात्म भावः

*

विरहवचनेषु भक्तिप्रवृत्तिः —

यदा कालिदासं प्रत्यालोचयाम स्तदैव "वागर्थाविव संपृक्ता" विति प्रार्थना स्फुरति मानसे । कालिदासः शृङ्गारप्रिय इति प्रतीतिः। शृङ्गारस्तु रसराजः । यदि स धार्मिकः सम्प्रदाय विलसित श्च भवति तर्हि पविलोराजते । सज्जनतया सम्मिलितः सर्वजन समादृतिं भजते । कालिदास कथापात्राणि सर्वाण्यपि उत्तमसम्प्रदाय बद्धानि धार्मिक परिणति विलसितान्यादर्श पात्राण्येव । अत एव तेषां व्यक्तित्वानि सार्वकालिकसम्मान भाजनतया विलसितानि विराजन्ते ।

मानवस्य कार्यक्षेत्रं यत्किमपि भवतु नाम । तात्कालिकं तस्य लक्ष्यं वा यत्किमप्यस्तु तन्निर्वाहेतु मानवो धर्मदूरो न भवेदिति एष भारतीयः सम्प्रदायः । तादृशः कथाप्रपञ्चः जातेः श्रेयोदायको भवति । अनुस्यूतं मानव धर्म मवलम्ब्य लौकिक सर्वव्यापार विकास प्रदर्शनेन सर्वत्र रससृजनं कवितायाः परमं प्रयोजनमिति यदि भावयामः, तस्मिन् कालिदासः अलभ्यान् शाखाविशेषा नारुरोहेति ज्ञायते । न जाने स वामनो वा नवेति उद्बाहुर्बभूव वा नवेति, किंतु प्रांशुलभ्यन्तु फलं स्वयं लेभे अस्मभ्यं च ददौ ।

"प्रतिबध्नातिहि श्रेयः पूज्य पूजाव्यतिक्रमः" इति रघुवंशे "अनतिक्रमणीयानि श्रेयांसी ति शाकुन्तले च यो भावः प्रकटितः स

एव मेघदूते यक्षमुखतो भंग्यन्तरेण श्रूयते। उत्तरां दिशमुद्दिश्यालका-पुरीं गच्छतः उज्जयनीं दृष्ट्वा गन्तुं वस्तुतस्तु साध्यं न भवति। कुत इति चेत् सा पुरी मार्गे नास्ति। अत उज्जयनीतो गमनाय पन्था दूरो भवति। तथापि यक्ष. मेघं बोधयति यथा – यद्प्युत्तरांशा प्रस्थितस्य ते पन्थाः वक्रो भवति अर्थात् दूरो भवति तथापि त्वमुज्ज-यिन्या स्सौधोत्सङ्गप्रणय विमुखो मास्म भूरिति। अनेन उज्जयिन्या कालिदासस्य यस्सम्बन्ध स्स घनिष्ठ इति केचिन्मन्यन्ते। तत्तथास्तं। किन्तु यत्कविना "महाकालनाभ चण्डीश्वरं दृष्ट्वैव गच्छे"ति कथितं तेन तन्महाकवे रपरिहार्य स्सम्प्रदायप्रणयो व्यज्यते। यथावकाश माध्यात्मिक भावनापावना कालिदास वाणी मेघदूतेऽपि तदवकाशं न परिजहारेति कालिदासस्येद मान्तर्यं पण्डितैः परिशीलनीय मिति विज्ञाप्यते। मेघदूते विधुरहृदयोत्थेषु रम्येषु वचनेषु तदनुगुणा स्समुचिता रम्या श्च रसध्वनय स्सन्त्येव। तेभ्येऽपि वाच्यविषयाः केचन पाठकानाकर्षयन्ति। अपितु कवे राध्यात्मिकां बुद्धिं प्रत्यस्माकं किमवगाहनम् ? तस्मा दद्य तां भावनां किंचिद् भावयामः।

> आकाशे तारकं लिङ्गं पाताले हाटकेश्वरम्।
> मर्त्यलोके महाकालं दृष्ट्वा काम मवाप्नुयात्॥

इति स्कान्दोक्तिः। न केवलं मुक्तिस्थानमिदं। किन्तु विलासस्थान मपि। अत एव यक्षेणेदं प्रस्तुतम्। यथा—

> भर्तुः कण्ठच्छविरिति गणैस्सादरं वीक्ष्यमाणः
> पुण्य यायास्त्रिभुवनगुरो धर्म चण्डीश्वरस्य।

धूतोद्यानं कुवलयरजो गन्धिभिर्गन्धवत्या
स्तोयक्रीडानिरतयुवति स्नानतिक्तैर्मरुद्भिः ॥इति॥

सखे, चण्डीश्वरस्य पुण्यस्थलं गच्छ। तत्र गणास्त्वां स्वामिकण्ठच्छविं मत्वा सादरं वीक्षिष्यन्ते। गन्धवतीनदीवायुभिरपि त्वं सेव्यो भविष्यसि ये च तोयक्रीडानिरतयुवति स्नानतिक्ताः कुवलय रजोगन्धिनश्च।

कञ्चित्कालं तत्र स्थित्वा सूर्यास्तमयानन्तरं शूलिनं ते गर्जितैस्सेवय। शिवस्य श्लाघनीय पूजासमये आमन्द्राणि ते गर्जितानि यदि पटहायन्ते तर्हि त्वं अविकलं फलं लप्स्यसे इत्यपि यक्षो मेघं बोधयति। यथा—

अप्यन्यस्मिन् जलधर महाकाल मासाद्य काले
स्थातव्यं ते नयनविषयं यावदत्येति भानुः।
कुर्वन् सन्ध्या बलिपटहतां शूलिनः श्लाघनीयाम्
आमन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥

तत्र सन्ध्याकाले वेश्याः महाकालनाथ मुपेत्य नृत्यन्तः त्वत्तः नखपद सुखान् वर्षाबिन्दून् प्राप्यत्वयि मधुकर श्रेणि दीर्घान् कटाक्षान्प्यामोक्ष्यन्ते। अत एव तत्र कंचित्कालं स्थातव्यमिति सूचयति। चामरैर्वीजयन्त्यो गणकाः खड्गकन्दुक वस्त्रादीन् वीणां च धृत्वा देशिकं नृत्यं कुर्वन्ति। तद्दर्शनेन तत्कटाक्षप्राप्त्या तासा मुपकृतिकरणेन च हृदयाह्लादो भविष्यति। भवतापीत्यत्र विरहितस्य यक्षस्योक्तिभावे

शृङ्गारभावस्य पवित्रीकरणं बोधयति । अयं सम्प्रदायः य एव श्रीनाथेन आन्ध्रकविसार्वभौमेणानुकृतः कालिदासादिभ्यः । तावन्मात्रेण कवि· रेव शृङ्गारीति प्रवचनं सम्प्रदायानभिज्ञता मात्रमेव द्योतयति । उक्त भावं व्यक्तीकरोत्ययं श्लोकः ।

पादन्यासैः क्वणित रशना स्तत्र लीलावधूतः
रत्नच्छाया खचित वलिभि श्चामरैः क्लान्तहस्ताः ।
वेश्या स्त्वत्तो नखपद-सुखान् प्राप्यवर्षाग्रबिन्दून्
आमोक्ष्यन्ते त्वयि मधुकर श्रेणिदीर्घान् कटाक्षान् ॥

इति ततो हरनाट्य प्रसक्तिः ।

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रतिनव जपा पुष्परक्तं दधानः ।
नृत्यारम्भे हर पशुपते रार्द्रनागाजिनेच्छाम्
शान्तोद्वेगस्तिमितनयनं दृष्ट भक्ति र्भवान्या ॥

सन्ध्यापूजानन्तरं शिवताण्डवारम्भे नव जपाकुसुमारुणं सान्ध्यं तेजो दधानः पशुपते रुन्नत भुजतरुवनं मण्डलाकारेणाभिव्याप्त स्सन् तस्यार्द्र गजाजिनेच्छां हर । अर्थात् मण्डलत्वेनाभिव्याप्त स्त्वमेव तस्य गजाजिनस्थाने तत्सदृश स्तिष्ठ । भवानी तु शोणितार्द्रगजाजिनं शिव ताण्डव समये द्रष्टुमुद्विग्ना भवति । यदित्वमेव गजाजिनस्थाने स्थितः तया त्वं शान्तोद्वेगस्तिमितनयनं सादरं वीक्षिष्यसे । यथा त्वयि

गजाजिनत्वं गते शिवस्यापि गजाजिनेच्छा न भवतीति । एव मत्र मेघस्य गजाजिनसाम्य मुपमानिर्मातृशेखरेण प्रदर्शितं येन कविता-वैशिष्ट्य, जगत्पित्रो र्भक्त भाव, स्तदाराधने विनम्रभावः सान्ध्य-शोभादर्शनेन सम्मिलित इत्यहो कालिदासस्य सर्वज्ञत्वम् ।

कुमारस्वामिन मप्याराधयेति आदिशति यक्षः अथवा कुमार-सम्भवकाव्यकर्ता ।

यथा— तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान् व्योमगङ्गाजलार्द्रैः ।
रक्षाहेतोर्नव शशिभृता वासवीनां चमूना
मत्यादित्यं हुतवहमुखे सम्भृतं तद्धि तेजः ॥

पुरा किल तारकासुरविजय सन्तुष्टः सुरप्रार्थनावशाद्भगवान् भवानी-नन्दनः स्कन्दो नित्यमह मिह सहशिवाभ्यां वसामीत्युक्त्वा तत्र वसतीति प्रसिद्धिः ।

हे मेघ! कामस्वरूपत्वात्त्व, त्वं पुष्पवार्षुक मेघरूपस्सन् व्योमगङ्गा जलार्द्रैः पुष्पसारै स्तत्र नियत वसतिं कुमारस्वामिनं स्नपय । इत्थं त्वं पुष्पैः स्कन्दं पूजयेति भावः । कुतइतिचेत् आदि-त्यादधिकं तत् स्कान्दं तेजः इन्द्रचमूरक्षणार्थं भगवता चन्द्रशेखरेण अग्निमुखे सम्भृतम् । अतस्तत्तेजो हरस्यैव मूर्त्यन्तर मिति ज्ञेयम् । स्कन्दपुष्पाभिषेचनानन्तरं तद्वाहनं मयूरं यस्मिन् भवानी पुत्रप्रेम

दर्शयति, देवगिरिगुहा प्रतिध्वान महद्भिर्गर्जितै र्नर्तयेथाः। इत्थं च ते मार्दङ्गिक भावेन भगवतः कुमारस्वामिना प्युपासनं भविष्यतीति सूचना।

अत्रापि मेघदर्शनेन गर्जनश्रवणेन च मयूराणां नर्तनमित्येतत् प्रकृतिसिद्धं कविसमयं समुचिततया समन्वय माप्नोति महाकवे र्भक्ति-नम्रे व्यापारे।

अव्यक्तं व्यंजयामास शिवः श्रीचरणद्वयम्।
हिमाद्रौ शाम्भवादीनां सिद्ध्यै सर्वकर्मणाम्॥
दृष्ट्वा श्रीचरणन्यासं साधकः स्थितये तनोः।
इच्छाधीनशरीरोहि विचरेच्च जगत्त्रयम्॥ इत्यादि

शम्भुरहस्य वचनानुसारेणायं श्लोकः कथितः। यथा—

तत्रव्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः
शश्वत्सिद्धैरुपचित बलिं भक्तिनम्रः परीयाः।
यस्मिन् दृष्टे करणविगमादूर्ध्व मुद्धूत पापाः
सङ्कल्पन्ते स्थिरगणपद प्राप्तये श्रद्धधानाः॥

हिमाद्रौ कस्यांचिच्छिलायां व्यक्तमर्धेन्दुमौले श्चरणन्यासं भक्तिनम्रो भूत्वा प्रदक्षिणं कुरु। सिद्धाः सर्वदा तस्य पूजां कुर्वन्ति तस्य चरणन्यासस्य दर्शनेन जना उद्धूत पापास्सन्तः शाश्वतं प्रमथगणपदं प्राप्नुवन्तीति विश्वसन्ति।

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः
संसक्ताभिस्त्रिपुर विजयो गीयते किन्नरीभिः ।
निर्हादस्ते मुरज इव चेत् कन्दरेषु ध्वनिः स्यात्
सङ्गीतार्थो ननु पशुपते स्तत्र भावी समग्रः ॥

तत्र किन्नर्यः शिवस्य त्रिपुरविजयं गायन्ति । कीचका वायुपूरिता श्शब्दायन्ते । यदि तव गर्जितमपि मुरजमिव कन्दर प्रतिध्वनितं भवेत्तदा पशुपते स्सङ्गीतार्थोऽपिसमग्रे। भविष्यत्यतस्तथा कुर्विति भक्तिं प्रबोधयति ।

तदनन्तरं क्रौञ्चरन्ध्रप्रसङ्गात्परशुरामस्य विष्णोरपि संस्मरणं कृतम् । हिमाद्रितट समीपे द्रष्टव्यान् विशेषान् पश्यन् गच्छ हंस-द्वाररूपं क्रौंचरन्ध्र परशुरामकृतं यदस्ति तेनोदीचीं गच्छ । तिर्यगा-याम शोभीभव । तदा त्वं बलिनियमनाय विष्णुना उद्यतः पादइव दर्शनीयो भविष्यसि वन्दनीयश्चेति कथयति । ततश्चोर्ध्वं गत्वा दशमुख भुजो च्छवसित प्रस्थसन्धेः कैलासस्यातिथिः स्याः । कैलासस्तु त्रिदशवनिता दर्पणप्रायः । सच राशीभूत त्र्यम्बकाट्टहास इव राजते । तत्रस्थं त्वां मेचकवस्त्र भृतं बलभद्रमिवोत्पश्यामीत्यादिना मार्गदर्शकत्वेऽपि भक्ति नम्रता दृश्यते ।

कैलासे पार्वती परमेश्वर दर्शनसिद्धिरित्थं कथिता ।

हित्वा तस्मिन् भुजगवलयं शम्भुना दत्तहस्ता.
क्रीडा शैले यदि च विचरेत्पादचारेण गौरी ।
भङ्गी भक्त्या विरचित वपुः स्तम्भितान्त र्जलौघः
सोपानत्वं कुरु मणितटारोहणायाग्रयायी ॥ इति

कैलासे शम्भुर्भुजगवलयं हित्वा स्व हस्तं गौर्या दत्वा यदि विचरे त्तर्हि त्वं पर्वरचनया स्तम्भितान्त र्जलस्सन् तया मणितटारोहणायाग्र-यायी भूत्वा सोपानत्वं कुर्वितीश्वरसेवा प्रकार आदिष्टः । इत्थं कालि-दासेन महाकविनामेघदूतेपि ईश्वरार्चन कला प्रदर्शितेति दिग्दर्शनं तस्याः समाराधन तत्पराण म् ।

— ×—

# ७. ध्वनि विचारः

प्रकृतानुकूल प्रसङ्ग समन्वित प्रकृति परिशीलनं वाल्मीकिना उपमोत्प्रेक्षाद्यलङ्कार सौरभसहितं यत् प्रदर्शितं तेनैव मार्गेण तदनन्तरं कवय स्समचरन्यथाशक्ति। तथापि कालिदासवाण्यां यथा प्रकाशमवाप न तथान्यत्रेति गम्यते। विश्वं समस्तं वाल्मीकि रेकयादृशा दृश्य मेकं दर्शयामास। प्रकृतिरहस्यं सहृदयमनोज्ञत्वेन येनादिकविना विशदीकृतं तेन सर्वर्तु सौरभव्याप्तिः सर्वतोमुखं कृता। इमा मभिव्यक्तिं कविताहृदये अवगम्य कालिदासः स्वीयेषु काव्येषु तत्तद्विद्युद्विकासा-न्यदर्शयत्। येन कविना अलङ्कारैः साधनीभूतैः प्रकृति र्वर्णिता तस्य प्रतिभाया, विशिष्य, यः कविः विषयादेव विषयान्तरस्फूर्तिं ददाति, तस्य प्रतिभा विराजत इत्यनुभवैकवेद्यो यं विषय स्सहृदया-नाम्।

मेघदूते कविनिबद्धवक्तुर्यक्षस्य प्रौढोक्ति स्सर्वापि ललित ललित शृङ्गार रसनिष्यन्द एव। वियोगव्यथा बाधितो यक्षः सर्वमपि सृष्टिं शृङ्गारमयी मपश्यत्। सर्वमपि प्राणिजातं प्रकृत्या दृश्यमानेन सौन्दर्येणोद्दीपितं भवति। प्रवासिनस्तु तत्प्रयोजन मप्राप्य विधुरव्याथा मनुभवन्ति। कवेस्तु लेखिनी तद्विधुरतामधुरां कवितासुधां स्पन्दयति। तदेव प्रकृतिसौन्दर्यं हृदयमाधुर्यं च यन्मेघदूते दर्शितं नो यक्षेण। यथा वाल्मीकि स्तथैव कालिदासोऽपि भारतदेशस्य प्रकृति मस्माक मदर्शयत्। स्वभावप्रकटनं चाकारयत्। स्वीय भावानुगुणमेव सर्वापि

प्रकृते स्समन्वयं करोति । यक्षोपि तमेव चकार । वाल्मीकिरेकत्र रामवाक्येषु रम्य मेकं भाव मित्थं व्यक्तीचकार । यथा—

चञ्चच्चन्द्रकरस्पर्श हर्षोन्मीलित तारका ।
अहो, रागवती सन्ध्या जहाति स्वयमम्बरम् ॥

इदं वाक्यं ध्वनिमयं भासते । विरहितस्य रामस्य मनोभावनानुगुण मत्रैकस्य नायिकायाः शृङ्गारव्यवहारस्पूर्ति र्गम्यते । करस्पर्श, उन्मीलित तारका, रागवती, अम्बरं इत्यादि शब्दैरत्र इदं स्पष्टं यत् चन्द्रकिरण स्पर्शेण नक्षत्राणि हर्षोन्मीलितानि बभूवुः, तैश्च सहिता सन्ध्या आकाशं जहातीति । समयवर्णनेऽस्मि न्नेते शब्दा एके विचित्रं सन्निवेशं शृङ्गारमयमध्वनयत् । ईदृशान्येव कानिचिद्यक्षेण मेघदूते कालिदासः कथयां चक्रार । अस्तुनाम कियद्वा शृङ्गारजगत् यत्र कवि र्यं कञ्चिद्भावुकस्य भावनाया अवकाशं दत्वा वाच्यवृत्ते र्निर्वाहं करोति तत्रैव वयं कवे र्भावगाम्भीर्यं प्रतिभां च पश्यामः । महाकवि र्यावदेव वक्तव्य मस्ति तावदुक्त्वा शिष्टां रस सामग्रीं भावुक भावनायै मुञ्चति । स एव काव्यस्यात्मा भाव्यते रसज्ञैः पाठकैः । तादृक स्फूर्तयः काश्चिदत्र भाव्यन्ते प्रकृते काव्ये । एता अपि दिग्दन्तिनः पण्डिताः केचित् निराकुर्वन्तु । दिङ्नागाचार्येण कालिदास समकालिकेन कालिदासवाणी स्थूलहस्तावलेपै र्निरसितेति कथ्यते खलु । रसिको निचुलः कालिदास सहाध्यायी । सच परापादित कालिदास प्रबन्ध दूषणानि परिजहार किल । एतत्कथा

स्फूर्तिदायकं श्लोकभाग मादौ दृष्ट्वा इतरां स्ततोऽवलोकयामः ।

सोयं–"स्थानादस्मात्सरसनिचुला दुत्पतोदङ्मुखः खं
दिङ्नागानां पथि परिहरन् स्थूल हस्तावलोपान् ॥

इति पथि दिग्गजाः केचित् स्थूलहस्तावलोपान् कुर्वन्तु नाम तास्त्वं परिहरन् सरसनिचुला दस्मात् स्थानात् उदङ्मुखस्सन् (शीर्षमुन्नमितं कृत्वा निर्भीकः) समुत्पतेति यक्षो मेघमादेशयति । इतःपर मितरान् श्लोकान् कांश्चन तद्गत ध्वनिविशेषविचारेण मल्लिनाथसूरिसूचितेन परिशीलयामः ।

त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः।
सद्यस्सीरोत्कषणसुरभि क्षेत्रमारुह्यमालम्
किञ्चित्पश्चाद्व्रज लघुगति भूय एवोत्तरेण ॥

जनपदवधूलोचनानि भ्रूविलासानभिज्ञानि । किन्तु स्निग्धान्येव । जनपदध्वस्त्वयि प्रीतिं दर्शयन्ति । कुत इति चेत् – कृषिफलं त्वदधीन-मिति ते जानन्ति । तासां लोचनै स्त्वं प्रीत्या पीयमान स्सन् उन्नत-क्षेत्रमारुह्य सद्यः सीरोत्कषण सुरभि कृत्वा तत उत्तरेणैव लघुगति-र्गच्छेति भावः ।

अत्र क्षेत्रादिशब्दानां शक्त्या यथा बहुवल्लभः पतिः कुत्रचित्

क्षेत्रे अर्थात् कलत्रे गूढं विहृत्य दाक्षिण्य भङ्गभयात् नीचमार्गेण निर्गत्य पुनस्सर्वाध्यक्ष इव सञ्चरति । तद्ध्वनिति ध्वनिः । चमत्कार भावनेयं शृङ्गारमयी प्रकृत्यनुकूलत्वेन कथने दूतस्याप्युत्साह जनकतया भासते ।

स्थित्वा तस्मिन् वनचरवधू भुक्तकुंजे मुहूर्तम्
तोयोत्सर्गद्रुततरगति स्तत्परं वर्त्म तीर्णः ।
रेवा द्रक्ष्य स्युपल विषमे विन्ध्यपादे विशीर्णाम्
भक्ति च्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥

श्लोकेस्मिन् शिलाभिर्निम्नोन्नते विन्ध्यप्रत्यन्तपर्वते समन्ततो विसृमरां नर्मदां नदीं गजशरीरे रेखाभङ्गिभिर्विरचितं शृङ्गारमिव द्रक्ष्यसीत्यनेन प्रकृति सुन्दरता प्रदर्शनेन नयन कौतुकलाभो महां स्ते भविष्यतीति कथयति । एतेन कस्याश्चित्सुन्दर्याः प्रियतमचरण पातोपि ध्वन्यते । नद पर्वतयो र्नायिकानायकत्वेन कथनं कविसमयतया ध्वनित मिद मुत्तरोत्तर कविभिः कथानायिका नायकतमैव गृहीतमिति सहृदय विदित मेव खलु ।

तस्यास्तिक्तै र्वनगजमदै र्वासितं वान्तवृष्टि
र्जम्बूकुञ्ज प्रतिहतरय तोयमादाय गच्छेः ।
अन्तस्सारं घन ! तुलयितुं नानिलः शक्ष्यति त्वाम्
रिक्तस्सर्वो भवतिहि लघुः पूर्णता गौरवाय ॥

हे मेघ ! तत्रादौ त्वं वर्ष । ततस्तन्नदीतोयं यत्तिक्तैर्वनगजमदैर्वासितं पीत्वा गच्छेः । वान्तवृष्टित्वेन तिक्तजलपाना दन्तस्सारत्वेन च त्वां वातोऽपि तुलयितुं नालं भविष्यति । सर्वोऽपि रिक्त श्चेल्लघु भवति । पूर्णत्वं तु गौरवायैव भवतीति सिद्ध मेतत् । अथ मत्र ध्वनिरिति मल्लिनाथः कथयति ।

यथा— "आदौ वमनशोधितस्य पुंसः पश्चाच्छ्लेष्म शोषणाय लघुतिक्तकषायाम्बुपाना ल्लब्धबलस्य वातप्रकम्पोनस्या दिति अत्र शब्दशक्तिरेव वैद्यशास्त्रविशेषेण समन्विता भवति ।" इति

> तस्मिन् काले नयन सलिलं योषितां खण्डितानाम्
> शान्तिं नेयं प्रणयिभिरतो वर्त्मभानोस्त्यजाशु ।
> प्रालेयास्रं कमलवदनात्सोऽपि हर्तुं नलिन्याः
> प्रत्यावृत्त स्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥

तस्मिन् काले प्रणयिभिः खण्डितानां योषितां नयनसलिलं शान्तिं नेयम् । अतः सूर्यस्य मार्ग माशुत्यज । सूर्योऽपि नलिन्याः कमल-वदनात् प्रालेयास्रं हर्तुं प्रत्यावृत्तो भविष्यति तदायदित्वयि किरण-रोधके सति महान् विद्वेषः स्यादिति श्लोकस्यास्य भावः । प्रथमं खण्डितावृत्तान्तं कथयित्वा तादृश स्फूर्ते रेव सूर्यविषयेऽपि समन्वय भाव अत्र ध्वन्यते । नलिनी भार्या भानुरपि नलिन्यन्तरगमनं कृत्वा प्रत्यावृत्त इति अस्याः स्फूर्तेरत्र खण्डिता त्वं नलिन्या अपि सिद्धं भवति । कामिना मिच्छा विशेष विघातो विद्वेषं रोषं च जनयतीति

सूचना । इत्थमयं सूर्यमार्गे हस्तक्षेपं माकुर्विति ध्वनिः अपरं चात्र शास्त्रीयविज्ञान मस्ति यन्महाकवे र्व्युत्पन्नता बलं दर्शयति ।

आत्मानं चार्कमीशानं विष्णुं वा द्वेष्टि यो जनः ।
श्रेयांसि तस्य नश्यन्ति रौरवं च भवेद् ध्रुवम् ॥

इति निषेधो दृश्यते ।। तस्याप्यत्र ध्वनिनिक्षिप्तः कविना ।
एवमेव —

नेत्रानीताः सतत गतिना यद्विमानाग्र भूमी ।
रालेख्यानां नवजलकणै र्दोष मुत्पाद्य सद्यः ।
शङ्कास्पृष्टा इव जलमुच स्त्वादृशा जालमार्गै
र्धूमोद्गारानुकृति निपुणा जर्जरा निष्पतन्ति ॥

इत्यस्मिन् श्लोके यथा केनचिदन्तः पुरसचारवता दूतेन गूढवृत्या रहस्य भूमिं प्रापिता स्तत्र स्त्रीणां व्यभिचारदोष मुत्पाद्य सद्यः सा शङ्का क्लृप्तवेषान्तरा जारा क्षुद्रमार्गै निष्क्रामन्ति, तद्वदिति ध्वनि-र्निहितः ।

इत्थं मेघदूत नायकस्य यक्षस्य विधुर हृदया दुद्गता मधुर शृङ्गार भावना यथासम्भवै र्ध्व नभि र्विराजते ।

—x—

## ८. भवभूते रभ्युदय भावः

महाकवि र्भवभूति रष्टमशताब्दीय आन्ध्रः। "उत्तर राम-चरित्तम्" दृष्ट्वा लोकोय मस्य विशिष्टतां जज्ञे। "महावीर चरित" मिति नाम्ना कवे रस्य हस्ते रामायणस्यैव गाथा अन्यन् नाटक मभवत्। कविरयं "मालतीमाधव" नामकं साङ्घिक कथावस्तुकं नाटकं च निरमायि।

नाटक जगति श्रृङ्गार वीरयो रेव प्रधाने स्थाने स्थिते कविरय "मेको रसः करुण एवे"ति निरूप्य प्रादर्शय दित्यनेनास्य विशिष्टतां प्रत्येकतां जगाम। यद्यप्युत्तररामचरितं प्रसिद्धं नाटकेस्मिन् धर्मबद्धं गाम्भीर्यं दृश्यते। धर्मसूक्ष्मस्यैकस्य प्रस्फुटीकरण प्रयत्ने गाम्भीर्येण सह कवे रान्तर मपि मतं व्यक्तं भवेत्। तदैव प्रजा-सामान्ये तद्धर्मरहस्य स्यादरो लभ्यते। विज्ञातै तद्रहस्यः कवि र्भवभूतिः।

वस्तुतो भवभूतः कथामिमां नव्येन दृक्पथेनालोकयत्। सातापरित्याग भागं स्वयमेकय। नव्यया दृष्ट्या दृष्ट्वा तस्य पवित्रता-मकल्पयत्। तदनुगुणं यथातथा रङ्गस्थलानि निर्मितानि। स्वकीया अभ्युदय भावाः अर्थात् प्रगतिगामिनो(पुरागामिनः) भावाः सनातनानां महर्षीणा मेवाग्रतः पवित्रतया प्रदर्शनीया इत्यचिन्तय दिति मन्ये। कुत इति चेत् सर्वेप्यङ्का अरण्यप्रदेश संवृत्त कथाका एव दृश्यन्ते।

यद्यपि प्रथमोङ्कः अयोध्याया मेव प्रवृत्तया कथया भासितः चित्रसन्द-र्शनद्वारेण सोपि (अनारण्यक इव) (भासमानोपि) अरण्य मेव रङ्गस्थलं (कृत्वा) स्वीचकार नाटकसमाप्तौ कवि रात्मनो भावान् महर्षिभि स्तत्तुल्यैं श्चाङ्गीकृतां श्चकारेति भासते। तत एव "चोत्तरे रामचरिते भवभूति विशिष्यते।"

कविना प्रदर्शनविषयीकृतो वृत्तान्तः रामायणे उत्तरे भागः। तस्य रम्यमेकं कथानुकूलं सिंहावलोकनं प्रथमाङ्के चकार। अयं नाटक निर्माणे एव (तदा) नूतनः पन्थाः। अस्याः प्रक्रियायाः कल्प-नेन सीताकल्याण मारभ्यास्माक मत्र कथा प्रत्यक्षा बभूव परोक्षतः। प्रथमेङ्के बन्धुविरहाद्विकल मनस्कायाः सीताया विनोदकल्पनार्थं यत् चित्रप्रदर्शनं कृतं तस्मिन् यद्यप्यावश्यका एव वृत्तान्ताः प्रदर्शिताः तथापि कविः स्वोद्दिष्ट सृष्टेः करुणरसस्य बीजावापं अस्मिन्नेवाङ्के चकारेति रम्यमिदं निर्माण कौशलम्। घट्टोयं सीतायाः प्रत्यक्षसाक्षी बभूव "कियत् कथं वा रामेनारण्ये सीतायै परितापः अनुभूत" इति ज्ञातुम्। अनन्तर कथा मरण्ये एव यदसञ्चालयत् कविस्तादृशेन रचना नैपुण्येन रामस्य हृद्गतं प्रस्फुटं बभूवेति विज्ञेयम्। वस्तुतस्तु रामः शम्बूक वधायारण्यं जगाम। सन्दर्भेस्मिन् सीतारामयोः समागमं (वस्तुतस्तु यः समागम एव न स्यात्) कल्पयित्वा उभयो रपि हृदययोः कवि र्मधुरे करुणारसद्वारे उद्घाटया मासेति, अहो भवभूते स्सन्निवेश कल्पनानुगता निर्माण चातुरी महाभावुकता च।

लोके बाह्यप्रकृति वर्णनाद्विशिष्य आन्तर प्रकृतेः परिशीलने

एव प्रज्ञा प्रकृष्टा भासते । सैव कवेः शाश्वतीं कीर्तिं च ददाति । यद्यपि सीता स्वयं परित्यक्ता रामेण सा जानाति कोवा रामस्यान्तरो भाव इति । जानाति च धर्मनिर्णये रामस्य स्थितप्रज्ञताम् । अतोत्र व्यथा स्वविषये नास्ति किन्तु रामस्य व्यथाया दर्शनावगमनाभ्यां सा व्यथिता बभूव । घट्टेनानेन भवभूति धर्मबद्ध मेकं दाम्पत्य मस्मन्नयन गोचरं चकार । किंवा तन्महाकवे रान्तर्यम् ? कथं वा तत्कथायां व्यक्तीकृत मिति परिशीलयामः ।

"त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवन्त स्त्वया लोका स्त्व मनाथा विपत्स्यसे ॥"

इत्थं यदा रामो वदति तदा तत्रैव सीता निद्राति । अतस्तदा तस्माद् रामहृदयं सीतया नावगतम् । चित्र सन्दर्शनानन्तरं निद्रा-मुपगत वत्यां सीतायां दुर्मुख आगत्य सीतापवाद वृत्तान्तं रामस्य कर्णे अकथयत् तदा दुःखितो राम एव मवोचत् । अर्थात् – त्वया लोकाः पुण्या भवन्ति । त्वद्विषये जनानान्तु वाचः अपुण्या भवन्ति । यत्र त्वयैव लोका नाभन्तो भवन्ति तत्रैव त्वमनाथा विपन्ना च भवसि । भावोऽयं सीतया न विदितः । तथापीतः पूर्वमेव वशिष्ठ सन्देशं गृहीत्वा आगत मष्टावक्रं प्रति यद्रामो जगाद त च्छ्रुत्वा सीतया ।

तदिदम् —

**स्नेहं दयां च सौख्यं च यदिवा जनकी मपि ।**
**आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ।।** इति

लोकाराधन निमित्तं स्नेहादीन्येव न। किन्तु सीतामपि परित्यक्तुं राम स्संसिद्ध एव । तत्र तस्य व्यथा न भवति । इत्येष स्वभावो रामस्य सीतायाः परिचित पूर्व एव । राम एव मवदत् । तथापि यदा तदाचरणीयं भवति तदा व्यथायाः सम्भवता भवेद्वा न वेति विचारणीयम् । भवेदेवेति भवभूते राशयः । तस्या व्यथाया एव प्रदर्शने प्रयत्नस्तेन कृतः । अत एव भवभूतिर्विशिष्यते । इम मेव विशेषं पूर्वोक्ते सन्निवेशे प्रदर्श्य सीतायाः प्रत्यक्षं कृत्वा व्यथायाः पराकाष्ठां कल्पयित्वा उपशमं च सीतयैव कारयित्वा कविर्विशिष्ट मात्मनः कल्पनाचातुर्य मदर्शयत् । इदं भवभूते रेव साध्यं बभूव । इदमेव हृदयास्यागाधता प्रदर्शनं भवति । दुर्मुखागमनात्पूर्वं निद्राणां सीतां पश्यन् रामः —

**इयं गृहे लक्ष्मीरिय ममृत वर्तिर्नयनयो**
**रसावस्याःस्पर्शो वपुषि बहुल श्चन्दनरसः ।**
**अयं बाहुः कण्ठे शिशिर मसृणो मौक्तिकसरः**
**किमस्या न प्रेयो यदिपर मसह्यस्तु विरहः ॥**

इति भावयति । अनेन सीतयां रामस्यानुरागो व्यक्ती भवति सामाजि-जिकानाम् । एत त्परिज्ञानेन सामाजिक उत्तरोत्तरेष्वङ्केषु रामस्य

पुटपाक प्रतीकाशं करुणरसं आस्वादितु मर्हता माप्नोति। उत्स्वप्नायमानां सीतां दृष्ट्वा रामः "चित्र दर्शन जातो विरहभावः स्वप्नोद्योगं करोती"ति तां स्पृशन् —

अद्वैतं सुख दुःखयो रनुगतं सर्वास्ववस्थासु य
द्विश्रामो हृदयस्य यत्र; जरसा मस्मिन्नाहार्यो रसः।
कालेनावरणात्यया त्परिणते यत्प्रेम सारे स्थितम्
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते ॥

इत्युवाच। श्लोकेनानेन दाम्पत्यस्य परमार्थः प्रपञ्चितः। सुमानुष नाम दाम्पत्यम्। यदि हृदि भवभूतिं पदवाक्य प्रमाणज्ञं ज्ञात्वा वयं परिशीलयामः, तर्हि तस्य भावुकत्वेन सह विद्वात्ता शास्त्रज्ञता च सुव्यक्ते भवतः। तस्य दाम्पत्य क्षेमं प्रकृष्टतया प्रार्थ्यते। तद्दाम्त्यं कथं भूतमिति चेत् — यस्मिन् जाग्रत्स्वप्न सुषुप्त्याद्यवस्थासु सुख-दुःख सम्बन्धि अभिन्नत्वमनुगतं वर्तते। यत्र हृदयस्य विश्रामो लभ्यते। यस्मिन् ज्ञरयापि रसः अहार्यो भवति। विवाहादारभ्य शरीर सम्पातपर्यन्तं कालेन परिणते प्रेमसारे यद् वर्तते, तस्य दांपत्यस्य एक मेव क्षेमं प्रार्थ्यते। इदं भवभूते र्निर्वचनं दाम्पत्यस्य। इदं तत्वं रामहृदयेनावगतम्। ईदृशे रामहृदये परिपूर्णं सीताविरहं सामाजिक समास्वाद्यं चकार कविः।

द्वितीयाङ्के — शम्बूकवधार्थं रामः पुनर्वनमागच्छतीति आत्रेयी वनदेवतायै वासन्त्यै कथयति। ततस्सदयोद्यतरखड्गः राम-

चन्द्रः प्रविशति । भवभूतेः रामः करुणामयः । प्रथमं रामः स्वीयधर्म लोपमेव ब्राह्मणपुत्र मृते हेतु ममन्यत । ततो हेतुर्विज्ञात आकाश-वाण्या अद्य सदयोद्यत खड्गो राम इत्येन रामस्य बहुसुख दयामयत्वं व्यज्यते । एकत्र विप्रबालकस्य मृतिं प्रतिदया । तस्य हेतुः स्वस्यैव दोष इति भावना । सच दोष स्सीतापरित्यागरूप इति । अनया भावनया सीतायां समुत्पन्ना दया द्वितीया । अपिच अद्य मुने रेकस्य वधः कर्तव्यः स्वीयेन हस्तेन । अनया भावनया जायमाना दया तृतीया । धर्मात्मना रामेण शम्बूक वधं कृत्वा धर्मो रक्षितः । राम-स्यापि गाम्भीर्यं लोके व्यक्त मभवत् । किन्तु तस्य हृदयगतां व्यथां प्रति कस्य श्रद्धा भवति ? अस्यभिलाषो भवभूतेः तस्याः प्रदर्शने । तेदैव सामाजिकहृदयेषु रससिद्धि र्भवति । इदमेव निर्माणचातुर्यं नाम ।

**हे हस्त ! दक्षिण ! मृतस्यशिशो र्द्विजस्य**
**जीवातवे विसृज शूद्रमुनौ कृपाणम् ।**
**रामस्य बाहु रसिनिर्भरगर्भखिन्न**
**सीता विवासन पटोः करुणा कुतस्ते ?**

इत्थं वदन् कथमपि प्रहृत्य "कृतं रामसदृशं कर्म" इत्यवोचत् । ततः "अपि जीवेत्सः ब्राह्मणपुत्रः ?" इति तर्कयति । हेदक्षिणहस्त ! मृतं द्विजशिशुं जीवयितुं शूद्रमुनौ कृपाणं विसृज । निर्भरगर्भखिन्नां सीता मपि परित्यक्तुं त्वं समर्थोऽसि । तादृशस्य ते करुणा कुतः ? इति

श्लोकस्यास्य तात्पर्यम् । धर्मसङ्कटे सम्प्राप्ते हृदयस्य यादृक परिवेदनं भवति तस्यावगते रिदं साधनमभवत् ।

तृतीयेऽङ्के — वनदेवतया वासन्त्या समागमः, सीतासमागमः विरहस्य पराकाष्ठा, हृदयपरिशीलनं च भवन्ति । पुरा वनवाससमये वासन्ती सीतायास्सखी । सा रामं महाराज इत्यामन्त्रयति । लक्ष्मणस्य कुशलं पृच्छसि । महाराजेति सम्बोधनं श्रुत्वा रामः विरहतप्त हृदय-स्सन् अशृण्वन्निव गतस्मृतिं व्यक्तीकरोति सा पुनः पृच्छति । तस्मिन् पदे प्रणय विरहितत्वं ज्ञात्वा उद्विग्नो भवति । "सौमित्रिमात्रकः कुशलप्रश्नः । सोपि बाष्पस्खलिताक्षरः" इति भावयन् "सीताविवासन वृत्तान्त अनया किं विदितो भवे"दिति तर्कयति । कुशल्येव लक्ष्मण इति वदति । शोचन्ती वासन्ती "अयि देव ! किं परं दारुणः खल्वसि ?" इति वदति । अदृश्या सीता "सखि ! वासन्ति ! किं त्व मित्थं वदसि ? आर्यपुत्रः पूजार्हः, विशिष्य मम प्रियसख्याः !" इति वदति । ततो वासन्ती—

> **त्वं जीवित त्वमसि मे हृदयं द्वितीयम्**
> **त्वं कौमुदी नयनयो रमृतं त्वमङ्गे ।**
> **इत्यादिभिः प्रियशतै रनुरुध्य मुग्धाम्**
> **तामेव – शान्त – मथवा किमतः परेण ॥** इति वदति

त्वमेव मे जीवितम् । त्वमेव मे द्वितीयं हृदयम् । त्वमेव मे नयनयो श्चन्द्रिकाऽसि । मम देहे त्व ममृत मसि । ईदृशैर्वचश्शतै मुग्धां ता

मनुनीत्वा–तामेव-शान्तं - अतः परमुक्त्वा किं प्रयोजनम् ? इत्युक्त्वा मुह्यति । तामेवेत्युक्त्वा ततो वाक्य समापनं मोह श्चेत्यत्र युक्तमिति तत्रस्था तमसा वदति । अयं सन्निवेशः परिभावनीयः । पदवाक्य प्रमाणज्ञो भवभूतिः नाटकान्ते—

शब्दब्रह्मविदोबुधाः प्राज्ञस्य कवेः परिणतां वाणीं परिभावयन्त्विति वदति खलु ।

वासन्त्या पुनःपुनः पृष्ठस्सन् रामः सीतां क्रूरमृग भक्षितां मत्वा दुःखितो भवति । "आर्यपुत्रः मुक्तकण्ठं प्ररुदितो भवती"ति सीताया वाक्यं श्रुत्वा तमसा "इदं युक्त मेवे"ति वदति । "दुःखितैर्दुःखनिर्धारणानि कर्तव्यानीति" "पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया" इति । शोकक्षोभे प्रलापै रेव हृदय मवधार्यते" इति च कथयति । ततो रामः पौरजान पदानुद्दिश्य– हे पौरजानपदाः ! भवतां देव्या गृहस्थिति र्नाभिमता । तस्मात् तृणमिव शून्यारण्ये परित्यक्ता । नानुशोचिता च । चिरपरिचिता स्तेते भावाः मां द्रवयन्ति । अशरणै रस्माभि रद्य रुद्यते । प्रसीदत इति परादिति । तता वासन्ती "गतं नानुशोचनीय"मिति वदति ।

"धैर्यं कुतः —

**देव्या शून्यस्य जगतो द्वादशः परिवत्सरः**
**प्रणष्टमिव नामापि न च रामो न जीवति ॥"**

इति वदति सति रामो सीता "आर्यपुत्रस्य प्रियवचनै रेभिर्मोहिता

अपहृतास्मी"ति वदति । तमसा "वत्से ! एता वाचः न केवलं प्रियतमाः, स्नेहार्द्रा, श्शोकदारुणाश्च, अपितु सविषा मधुधारा स्त्वयि स्रवन्ती"ति कथयति । इत्थं तृतीयोऽङ्कः करुणरसप्रवाहो यदा भवति तदा भवभूति रन्ते तत्संविधातस्यैव समीक्षां करोति ।

**एको रसः करुण एव निमित्त भेदात्**
**भिन्नः पृथक्पृथगिव श्रयते विवर्तान् ।**
**आवर्त बुद्बुद तरङ्गमयान्विकारान्**
**अम्भो यथा सलिल मेवहि तत्समस्तम् ॥** इति ।

अन्वः आवर्तरूपेण बुद्बुदतरङ्ग रूपेण च यथा विकारान् प्राप्नोति, तथापि तत्समस्तं यथा सलिलमेव भवति तथैव एक एव करुणरसः निमित्त भेदात् विवर्तान् श्रयत इति अयं रससिद्धान्तो भवभूतेः प्रसिद्धः ।

उत्तरोत्तरेष्वङ्केषु वीरादयो अङ्गरसा निक्षिप्ताः । सप्तमाङ्के अन्तर्नाटक प्रदर्शनरूपं नव्यं मार्गं पश्यामः । सीतापरित्यागादारभ्य सर्वा कथा अत्र व्यक्ता भवति । अन्तेच नाटकं सुखान्त मभवत् । इत्थं भवभूते रान्तर्यं करुणैकमयं मङ्गलान्तं च प्रवर्तते ।

षष्ठाङ्के युध्यतो र्लवचन्द्रकेत्वो स्समीपं राम आगतः पुनर्वात्सल्य माधुर्यं करुणाच समुचितरीत्या प्रवहन्तिः । कुशलवाभ्यां परिचयानन्तरं, तौ वाल्मीके शिशष्याविति, रामायणरचनावृत्तान्तं च

ज्ञात्वा तस्माद्रामायण काव्याद् यत् किञ्चित् श्रावयता मिति तौ रामः पृच्छति । उत्तर कथा येन केनाप्यज्ञाता भरतमुने स्सकाशं वाल्मी-किना प्रेषितेति कविः कथयति । अनेन कौ कुशलवाविति तेषां, रामलक्ष्मणयोः अथवा सामाजिकानां अज्ञात मेव स्थितमिदं रहस्यं । इयं रचनायां निगूढता गम्भीरता च । अस्मिन् कथानिर्माण विधानेपि भवभूते रभ्युदयमार्गः प्रस्फुटो भवति । कुशः रामायणादुद्धृत्य द्वौ श्लोकौ श्रावयति । तौ च द्वौ सीताराम प्रणयाति रेकमेव द्योतयत इतीदं कवे श्चातुर्यम् । इदं च रामस्य विरहवेदनां पुनरुद्दीपयति ।

अन्ते सीतापरित्यागादारभ्य एतत्पर्यन्तं यो वृत्तान्तः प्रवृत्तः तत्सर्वोप्यत्राविर्भवति । वाल्मीकिरिमं ग्रन्थि विस्रसयति । एतावत्पर्यन्तं सामाजिकाना मुत्कण्ठा मभिवर्धयन् कथासञ्चालनं विशिष्टं कुर्वन् भासते भवभूतिः ।" "जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वरः ।

— x —

# ९ भासमहाकवे रविमारकम्

अश्वघोषादर्वाचीन : कालिदासात्पूर्वश्च भासमहाकविः। तेन रचितानि नाटकानि त्रयोदश। तेषु षट भारत कथा संबंधीनि। द्वे रामायण कथा वस्तुविलसिते। चत्वारि भाव्यंते "बृहत्कथांतर्गत कथाभासितानीति। एकं कृष्णकथाकं। स्वरूपेषु कानिचिदल्पानि कानिचिदधिकशरीरकाणि च भवंति। अविमारकं बृहत्कथान्तर्गत कथाधारकं भाव्यते। न तु पौराणिकम्। चरित्राभासया भासते नाटक मिदम्। नारद प्रवेश प्रसङ्गेन, शापोपसंहार कथाप्रधानतया च नाटकस्यास्य पौराणिकाभासः सञ्जातः। अलौकिक कृत्यानां प्रदर्शनं, विद्याधर सम्पर्कं श्च दोहदी भूत्वा नायकस्याति मानुषीं शक्तिं प्रापयामासतुः। कल्पिता अपि गाथाः नारदादि सम्पर्केण सहिता अस्मत्सारस्वते दृश्यन्ते। अस्यान्ध्रभाषायां "कलापूर्णोदया" ख्यः प्रबन्धः साक्षीभवति।

भासरचनासु स्वप्नवासवदत्त, चारुदत्त, प्रतिज्ञायौगन्धरायणानां यावती व्याप्तिः प्राप्ता न तादृशीं व्याप्ति मविमारक मवाप। अविर्नाम मेषः। मेषरूपधारिणं धूमकेतुनामकं राक्षसं हत्वा (मारयित्वा) सौवीर कुमारः अविमारकोऽभवत्। अविमारक नायकत्वा न्नाटक मिद मविमारकं कथ्यते।

कथासंग्रहः — सौवीरराजः चण्डभार्गवमुने श्शापात् संवत्सर परिमितं चण्डालत्व मवाप। ततस्सः सपरिवारस्सन् कुन्ति भोजनगरं गत्वा तत्र प्रच्छन्नतया उवास। तस्य पुत्र एव विष्णुसेनः यः बाल्ये एव अविं हत्वा अविमारको बभूव। अविमारकस्य जननी कुन्तिभोजस्य भगिनी। एकदा कुन्तीभोजसुता कुरङ्गी मत्तगजेन बाध्यमाना वीरेणाविमारकेण रक्षिता। तदा समुत्पन्न स्तयोः परस्परानुगः विरहत्वेन परिणतः।

चण्डाल इति भाव्यमानो अविमारकः राजान्तःपुर चेटिकानां साहाय्येनान्त पुरं सरहस्यं विवेश। तत्रैव वत्सरकाल मुवास। वृत्तान्तोयं कुन्तिभोजेन ज्ञात इति यदाऽवगम्यते अविमारकेण तदा सः तस्मान्निर्गत्य प्रियाविरह भारस्यासह मानत्वा दग्नौ विनेश। अग्निस्तु शीतो बभूव। पर्वतमारुह्य तस्माद्यदा स पतनोन्मुखो भवति तदा गन्धर्व एक आगत्यांगुलीयकमेकं दत्वा दक्षिणहस्ते अंगुलीयकस्यास्य धारणेन अदृश्यो भवितासि, वामहस्ते यदि धारयसि तदा दृश्यो भवितासि चेत्युक्त्वा मरण व्यापारा न्निवर्तयामास। गच्छ राजान्तःपुर मिति च जगाद। तदनुसारेण यदा अविमारको राजान्तःपुरं प्रविशति तदा राजकुमारी विरह मसहमाना मुमूर्षु रुद्बन्धनोद्युक्ता दृश्यते। तदा स्वयं प्रत्यक्षी भूय तां ररक्ष। नारदमुखतः समग्र मामूलाग्रं चाविमारक वृत्तान्तं श्रुत्वा कुन्तिभोज्येपि मोद मवाप। गान्धर्वेण विधिना कुरंग्या सह अविमारक स्योद्वाहो बभूवेति नारद-

वाक्यं, तस्याशिषश्च श्रावयित्वा नाटकं सुखान्तं भवति। अस्मिन् षडङ्कास्सन्ति।

आदितो प्यस्मिन्नाटके सन्देहः सम्यक् प्रोषितः। षष्टोङ्क स्तं यवनिकान्तरा दाहृत्येव तन्निवारण मकरोत्। "अविमारकः अग्ने रनुग्रहेण जातः सुदर्शनायम्। साच तमात्मसोदर्यै सौवीर राजमत्न्यै ददौ" इत्येतद्वृत्तान्तस्य पश्चात्प्रकटनं कुन्तिभोजस्याभिलाषानुसारेणैव तस्य पुत्री कुरङ्गी अविमारकस्यैव पत्नी बभूवेति चैतत्सर्वम् कवेः कल्पनाचातुर्यस्योदाहरणं भवति। स्वयमग्नेः कुमार इत्यजानतो अविमारकस्य अग्निप्रवेशेनाप्यदग्धत्वं कालान्तरपरिज्ञातेन याथार्थ्येन रम्यं सामञ्जस्यमवाप।

कालिदासशूद्रकादीना मनेकेषां मार्गदर्शीभासः परिणतया बुद्ध्या परमनागरकभावैश्च नाटक मिदं सहृदय हृदयाह्लादकं निरमायि।

उद्यानस्थायाः स्वामिदारिकायाः यान मेव मदान्धो हस्ती प्राप्तइत्यमात्येनोक्तः कुन्ति भोजः "अथकेन सनाथी कृता कुरङ्गी?" इत्यपृच्छत्। अस्मिन् प्रश्ने एव सूचिता कुरङ्गी अविमारकेण सनाथा कृतेति। केन रक्षितेति प्रश्नः। किन्तु सनाथीकृतेत्यनेन भाविकथानुकूलकल्पना चातुरी ध्वनिमयी समारब्धा प्रथममेवेति भावुक जनानामानन्दः।

ततः कांजायन अविमारकं प्रस्तुतवन् — "दर्शनीयोप्यविस्मितः तरुणोप्यनहङ्कारः, शूरोपि दाक्षिण्यवान्, सुकुमारोपि बलवान् स्वामिदारिकायां हस्तिनाभिभूयमानायां तत्कालदुर्लभमभयं प्रदाय निर्विशङ्कस्समा सादितवान् तं द्विपवर" मित्याह इत्थ मतैव भासः स्वीय कथानायकं उदात्तगुणोदारं भणयत्यादावेव चतुरया वाक्यवैखर्या, या रीति स्तत स्ततः कवीन्द्रै रीहशेषु सन्निवेशेषु अनुसृता सुवि-स्तृता च ।

अविमारक पितरं प्रति भूतिक इत्थं वदति ।—

"प्रच्छन्नोप्यनुकृति लक्ष्य राज भावो मेघान्तर्गत रविवत् प्रभानुमेयः ।" इति । अतो भूतिकः अविमाकं राजकुमारं निश्चिनोति । इदं नायकस्योदात्तता स्थिरीकरणम् ।

छन्ना भवन्ति भुवि सत्पुरुषाः कथञ्चित्
स्वैः कारणै गुरु जनैश्च नियम्यमानाः ।
भूयः परव्यसनमेत्य विमोक्तुकामा
विस्मृत्य पूर्वनियमं विवृता भवन्ति ॥ इति निष्कर्षः ।

प्रथमे अङ्के स्थापनानन्तर मेव राजा प्रविश्य स्वस्य समुचित राज्य-पालकत्वं संस्मृत्य कन्यायाः अर्हते वराय प्रदानविषयं चिन्तयन् मनः प्रहर्षो न मेऽस्तीति चिन्तयति । व्यथां प्रकटयति । कथयति च— कन्यापितुर्हि बहुचिन्तनीयमितिम् । वल्मीकिरपि "जनकः कन्यादान-विषये विव्यथे" इति कथयति । यदासीता स्वीय कल्याणवृत्तान्त मन-

सूयऐ अकथयत् तदेत्थमाह— "पति संयोग सुलभं वयो दृष्ट्व" त्यादि । अनेन ज्ञायते भावनेय मतिप्राचीनेति । अस्याश्च नवीना सुपरिणता क्लेशरूपा स्थिति रस्माभिरयानु भूयत इति सत्यमेतत् । "दिष्ट्या धूमाकुलित दृष्टे रपि यजमानस्य पावक एवाहुतिः पति" तेति कालिदासोपि शकुन्तलां प्रति तातकाश्यपस्याभिनन्दनं प्रकटित- वन् खलु ।

अत्रापि राजा "विवाहानाम बहुशः परीक्ष्य कर्तव्या भवन्ति । कुतः —

ज्ञा ातृसम्पत्ति मचिन्तयित्वा<br>
पित्रा तु दत्ता स्वमनोभिलाषात् ।<br>
कुलद्वयं हन्ति मदेन नारी<br>
कूलद्वयं क्षुब्ध जलानदीव ॥ इति वदति । यथा—

"अतः परीक्ष्य कर्तव्यं विशेषात्सङ्गतं रहः" इत्यादि कालिदास वाक्यम् । इत्थमिय मनुस्यूता भावना ।

नाटकेस्मिन् गान्धर्वविवाहे रहस्यवृत्तेपि शुभान्तत्वं शङ्का विहीन कथाविधानप्रदर्शनं च सनातन धर्मपालन परायणतया भासते ।

राजा – अहो ! महद्भारो राज्यं नाम । कुतः -

धर्मः प्रागेव चिन्त्यः सचिव मतिगतिः प्रेक्षितव्या
स्वबुद्ध्या
प्रच्छाद्यौ रागरोषौ मृदुपरुषगुणौ काल्योगेन कार्यौ ।
ज्ञेय लोकानुवृत्तं परचरनयनं मण्डलं प्रेक्षितव्यम्
रक्ष्यो यत्नादिहात्मा रणशिरसि पुनः सोपि
नावेक्षितव्यः ॥

इति विवृणोति । इम माचार मनंतर नाटक कर्तारः अनुसृतवंतः । यथा शाकुन्तले –"नाति श्रमापनयनाय नच श्रमाय राज्यं स्वहस्तधृत दण्डमिवातपत्रं" इत्यादि दृश्यते । जयदा नलिनिकाभ्यामाहूतो ऽविमारकः कन्यांतःपुरम् । तदनुकूलः प्रबंधः कृतः । प्रथममविमारक हस्ताभ्यां किंचिन्त्यते इति पृष्टस्सन् शास्त्रं चिन्त्यत इतिवदति । किं नामैतद्रमणीयं शास्त्रम् विविक्ते चिन्त्यते' इति पुनः प्रश्नः । वस्तुतस्तु सः कुरङ्गीविरहातुरः । तथापि कुशलिना तेनोक्तं योगशास्त्रं चिन्त्यत इति । ते च "योग मिच्छन्त्यौ आवां महागते स्वः । अनुगत आर्येण योग इति ननु निष्ठितं कार्यं मस्काकं राजकुले विविक्ते अवकाशे । तत्रापि कोपि जनः अधिकतरं योगं चिन्तयन्नस्ति । तेन सह तत्रैव सुष्टु योगविधानं चिन्त्यता" मित्यकथयतां । अयं संभाषण क्रमः चमत्कृत्याधायकत्वेन कान्तासम्मितत्वेन च भासमानः कुरंग्य-विमारकयोर्योगं प्रति संविधानक मकारयदित्येष भासस्य भाषण चातुर्यं भावुकै र्भावनीयम् । अयमेव योगः क्रमशः नायिका नायकयो स्संयोगमार्गदर्शको भूत्वा सुखं दत्वा ततो वियोगरूपं गतः । विप्रलंभ

पराकाष्ठा मवाप । रसपुष्टिं समुपलभ्य पुनस्समागमाधायक स्सन् पुनस्संयोगकारित्वेन "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते" इत्यस्यानुकूलतया नाटके विस्तृतो विकसितश्च भासते रम्येण कथागमनेनेति सहृदय हृदयानन्दः ।

रहः प्रक्रियया राजान्तःपुर प्रवेशाय अविमारक स्सङ्कोचं नाप्नोति । वयस्य मेवं वदति ।

भग्ना मयैकेन परा स्ससैन्या
अद्यापि गन्धेन न संश्रयन्ते ।
किं मानुषै स्मोप्यसुरेश्वरो मे
हतोभुजाभ्या मविरूपधारी ॥

अयमविकारकस्य पराक्रमप्रकारः । मित्रं निवारयन्नेक मेवाहं गच्छा-मीति शास्त्रमार्गं विवृणोति ।

"एकः परगृहं गच्छेत् द्वितीयेन तु चिन्तयेत् ।
बहुभिस्सञ्चरं कुर्यादित्ययं शास्त्रनिर्णयः ॥

इतीदं तस्य शास्त्रज्ञानम् । प्रयाणसमये सः— "अहो विचित्र-स्वभावता जगतः ! कुतः —

व्यामृष्ट सूर्यतिलको विततोडुमालो
नष्टातपो मृदुमनोहरशीतवातः ।
संलीन कामुकजनः प्रविकीर्णशूरो
वेषान्तरं रचयतीव मनुष्यलोकः ॥ इत्युवाच ।

इयं चास्य लोकज्ञता प्रकृति परिशीलन रसज्ञता च । जयदानलिनि-काभ्यां सहकृतोऽविमारकः चोररूपेणान्तःपुरं प्रविशति । तत्रायं कुरंग्या सह रमते । मार्गे रात्रौ नगरवर्णनादयः कृताः । अत्र य श्चोर समुदाचार स्तेन कृतः (निर्वर्तितः) स स्मारयति शर्विलकं मृच्छकटिक चोरं । सहृदया श्शूद्रकरचनातौल्यं चिन्तयन्तु ।

"नमः प्रजापतये । नमस्सर्वसिद्धिभ्यः । प्रसीदन्तु बलि-शम्बर महाकालाः । विजृंभतां रात्रिः । वर्धतां निद्रा । अनुमन्यतां पद्मा । लयङ्गता स्सर्वविघ्ना भवन्तु । हताः परिपन्थिका भवन्तु । जयतु भगवती कात्यायनी ।" इत्युक्त्वा 'दैवानुकूल्यमनुभूय —

यत्ने कृते यदि न सिध्यति कोत्र दोषः
कोशा न सिद्ध्यति नमेतिकरोति कार्यम् ।
यत्नै श्शुभैः पुरुषता भवतीह नृणाम्
दैवं विधानमनुगच्छति कार्यसिद्धिः ॥

इत्यात्मकृत्येन दैवसमन्वयं करोति विद्वानविमारकः । अत्र यत्ने कृतेत्यादि श्लोकपादेन पण्डितानां सुपरिचितः कवितायाः प्रसिद्धि प्रशस्ततां च व्यक्तीकरोति । तारुण्यं प्रति भासोक्तिरियम् —

"कष्टं तारुण्यं नाम —

रागं विजृम्भयति संश्रयते प्रमादम् ।
दोषान्न चिन्तयति साहस मभ्युपैति ।

स्वच्छन्दतो व्रजति नेच्छति नीतिमार्गम्

बुद्धिं शुभां सुविदुषा स्ववशी करोति ॥ इति ।

अभ्यन्तरं गत्वा सुप्तां कुरङ्गीं पश्यन् अवबोधयितुकामां नलिनिकां वारयन् —

अहं द्विनेत्रो न सहस्रनेत्रः

मतिश्चमूढा सुचिराभिलाषात् ।

कामार्णवस्याद्यतु दृष्टपारम्

चेक्रिञ्चतां मे सुखमक्षियुग्मम् ॥ इति स्वस्य

रसज्ञतायाः पारम्यं प्रदर्शयति नायकः । इत्थ मारभ्य सुखित स्तत्र सः । कन्यान्तःपुरे सवंत्सरोषितः सः स्ववृत्तान्तं राज्ञा ज्ञातमित्यवगम्य उपायेन ततोनिष्क्रान्तः । ततो विप्रलम्भस्य परिपुष्टिः कृता कविना नायको मर्तुकाम अग्निंविशति । अग्निस्तं "पुत्रं पितेव च परिष्वजति प्रहृष्टः" विद्याधर समागमः । अंगुलीदानं, पुनरन्तःपुरप्रवेशः, नारदागमनादिकं चानन्तर कथाविधानं भवति । संग्रहेण सर्वं नारदेनेत्थमुक्तम् —

दत्ता सा विधिना पूर्वम् दृष्टा सा गजसम्भ्रमे

पूर्वं पौरुषमाश्रित्य प्रविष्टो मायया पुनः ॥

एव मविचारकं रम्यं साहसवृत्तं सत् अनन्तर कविमार्गदर्शकं च रराजेतिशम् ।

—X—

# १०. प्रबोध चन्द्रोदयम्

संस्कृतनाटक प्रपञ्चे धर्मप्रचार निमित्तकानि कानिचिन्नाटकानि सन्ति। विधानमिद देशान्तरेष्वपि दृश्यते। क्रैस्तवीये एकादशे शताब्दे कीर्तिवर्मण स्सभाया मधिष्टित विद्यापीठः परमहंसः श्रीकृष्ण-मिश्र यतींद्रः अद्वैतसिद्धान्तानुगुणं प्रबोधचन्द्रोदयं नाम नाटक मरचयत्। तत श्चतुर्दश्यां शताब्यां सङ्कल्पसूर्योदयं नाम विशिष्टाद्वैत सिद्धान्तानुगुणं नाटकं श्रीमद्वेङ्कटनाथेन रचित मासीत्। अनन्तर मुभयग्राहकराहृदयाख्य मेकं नाटकं माध्वेनैकेन कृतं किल। तच्च न मुद्रितम्। चैतन्य चन्द्रोदय नामक मन्यन्नाटकं वङ्गदेशीय चैतन्य मतानुविद्धं कविकर्णपूराख्येन कविना 1525 वत्सरे कृत मिति ज्ञायते। ईदृङ् नाटकानां मार्गदर्शकं प्रबोधचन्द्रोदयमेव। तत-स्समागतानां न प्रसिद्धिः। पण्डितलोके प्रबोधचन्द्रोदयं त्वद्यापि स्वकीयां विशिष्टतां निरूपयत्येव।

ग्रन्थसंशोधनकर्ता पणशीकरोपाह्वयेन लक्ष्मणतनुजनुषा वासु-देव शर्मणा प्रस्तावनाया मित्थं लिखितम्—

‘यदिदं प्रबोधचन्द्रोदयं नाम नाटकं प्रधानशान्त रसमपि उपसर्जनीभूत शृङ्गाराद्यखिलरससमाश्लिष्टं धीरोदात्तनायकोपोद्धत नायक संधि पञ्चकोपसंधि चतुष्षष्ट्यङ्गविष्कम्भादि पञ्चक, भारत्यादिरीति परिभाषा पताकास्थान वृत्ताद्यौचित्याद्यखिल नाट्यगुणविलासै मंडित

मप्यामूलांत मध्यात्मविषय विद्याप्रतिघाति नानापाखण्डि मतोच्छेद-
कारि सिद्धान्तानाविष्कुर्वन् उभयप्रवणतयाऽनौपम्येन वरीवर्ति धरा-
मण्डले" इति ।

एतन्नाटक रचनायाः द्वे हेतू कथ्येते । (1) कृष्णमिश्रस्य बहव अन्तेवासिन आसन् । तेष्वेकेन वेदान्तो नावगम्यते । तस्मै वेदान्तबोधनाय साधनतया नाटक प्रक्रियामाश्रित्य कृष्णमिश्र इदं नाटक मकल्पयत् । काव्यापेक्षया नाटकस्य प्रदर्शन योग्यत्वेनास्मिन् सुलभतरग्रहणीयता लक्ष्यते खलु ।

(2) महाराजस्य कीर्तिवर्मणश्चाद्वैतं दुरवगाहं बभूव । तदा तेन यतीन्द्रेणेदं निर्मितं प्रदर्शितं च बभूव, येन राज्ञश्चित्ते अद्वैताभि-रुचि स्समुत्पन्नेति च ।

इदन्तु प्रशंसनीयं यद् – जीवने अभ्यसनीयाः सद्गुणाः त्यज्याश्च दुर्गुणाः नाटकरूपे प्रदर्शिता भूत्वा उपदेष्टुं प्रयत्नः कृतः जगद्गुरुणा मनस्तत्वशास्त्रज्ञेन कृष्णमिश्रेणेति । तत एव नाटकेऽस्मिन् पात्राणि विवेक, सन्तोष महामोहाहङ्कारादयः पुरुषाः, शान्ति श्रद्धामैत्रीकरुणादयः स्त्रियश्च दृश्यन्ते । धर्माधर्म सङ्घर्षणं कथावस्तु । प्रसिद्ध महाभारत कथौपम्यं गम्यते । विवेकादिभिः कामक्रोधादयो विजिताः । भागवतीय पुरजनोपाख्यानस्याप्यस्य प्रेरकत्वं कैश्चिदव-गम्यते । अयमत्र विशेषः साधारणतया नाटके शृंगारवीरान्यतर प्रधानेसति नाटकेस्मिन् शान्त अङ्गीरसः अन्ये रसा अङ्ग इचेति ।

वेदान्तसिद्धान्तोद्घाटन पुरस्सरं नाटकमिदं सरस रसिक चेतोहारि, निखिल नाट्यगुण मण्डितं चेत्याश्चर्य जनकोयं यत्नः कृतः श्रीकृष्णमिश्रेण। केवलं गुणानां व्यक्तित्वं दत्वा जीवन परमार्थं बोधयता लोकज्ञेनानेन कविना नाटकारम्भ इत्थं कृतः ।

मध्याह्नार्क मरीचिकास्विव पयः पूरोदर ज्ञानतः
खं वायु र्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति ।
यत्तत्वं विदुषां निमीलति पुनः स्रग्भोगि भोगोपमम्
सान्द्रानन्दमुपास्महे तदमलं स्वात्मावबोधं महः ॥ इति

प्रथमाङ्के कामः स्वप्रियां रति मित्थमाह—

एकामिष प्रभवमेव सहोदराणा
मुज्जृंभते जगति वैरमिति प्रसिद्धम् ।
पृथ्वीनिमित्त मभवत् कुरुपाण्डवानाम्
तीव्रस्तथापि भुवनक्षयकृद्विरोधः ॥

अत्रामिषशब्दो लक्षणया भोग्यवस्तुपरः । एकामिषप्रभवं वैरमित्यनेन भोग्यवस्तुनिमित्तकं वैरं सोदरेषु दृश्यते इति सूचनया कुरुपाण्डवयुद्ध मुदाहृतम् ।

नाटकेस्मिन्नद्वैत, चार्वाक, जैन, बौद्ध, कापालिकादि मतानां सिद्धान्त विचारः कृतः । यथा भा॰ते कुरुक्षेत्रस्य प्राधान्यं तथैवात्र द्वे क्षेत्रे रङ्गस्थलस्थिति मवापतुः । एकं काशीक्षेत्रं । अन्यच्च पुरुषोत्तम

क्षेत्रम् । ऐहिकामुष्मिक विषयसूचकता ह्यनयोर्दृष्टा । इदं षडङ्कपरिमितं नाटकं । एतेष्वङ्केषु क्रमशः (1)विवेक महामोहपक्ष विचारः । (2) महामोह विलासः । (3) पाषण्ड विडम्बनम् । (4) विवेकस्योद्योगः । (5) वैराग्य प्रादुर्भावः । (6) जीवन्मुक्तिश्चेति विषयास्सन्ति ।

ईश्वरो नाम राजा तस्य पत्नी मायेति च स्तः । तयोः पुत्रः मनः । तस्य पत्न्यौ प्रवृत्तिनिवृत्तीति द्वे । प्रवृत्ते महामोहादयः पुत्रा आसन् । निवृत्तेः पुत्रो विवेकः । सपत्नी पुत्राणा मेतेषां मध्ये राज्यकांक्षया कलहो बभूव । अन्ते च विवेकस्य विजयः महामोहा-दीनां पराभव श्च । ततः प्रबोधचन्द्रोदयश्च समुद्भूतः । विष्णुभक्ति नाम्नीदेवी कथां निर्वाहयति । नायकस्यात्र शत्रुर्महामोहः (प्रतिनायकः तस्य मन्त्रिणः कामक्रोधलोभदम्भाहङ्काराः । विवेकस्यामात्यपदं श्रद्धा नाम नारी अलङ्चकार । श्रद्धायास्सखी मैत्री । विवेकस्य पत्नी मतिः । क्षमा तस्याः दासी । महामोहस्य पत्नी मिथ्यादृष्टिः । हिंसा क्रोधस्य पत्नी, तृष्णा च लोभस्य भार्या भवतः । एतैर्नामधेयै रत्र पात्राणां मनो भावा भावनीया भवन्ति भावुकैर्महोदयैः ।

अथ नाटके तत्र तत्र तत्तत्पात्राणां भाषण परिशीलनेन कविना उद्दिष्टमुपदेश मवगन्तु मुद्युक्ता भवामः ।
रतिः पृच्छति स्वपतिं कामम् । यथा— "आर्यपुत्र, श्रुतं मया युष्माकं विवेक शमदमप्रभृतीनां चैक मुत्पत्तिस्थानमिति" ततः कामः कथयति— "आः प्रिये, किं मुच्यते एक मुत्पत्ति स्थानमिति । ननु जनकयेवास्माक मभिन्नः । तथाहि—

सम्भूतः प्रथम महेश्वरस्य सञ्ज्ञा

न्मायायां मन इति विश्रुतस्तनूजः ।

त्रैलोक्यं सकलमिदं विसृज्य

तेनाथो जनित मिदं कुलद्वयं नः ॥ इति

इत्थमत्र मानवतायां विरुद्धभाव जातस्यैकत्रैवोत्पन्नता विभिन्नता च प्रकटीकृते भवतः । क्रोध आत्मानमित्थं प्रकटयति । यथा –

अन्धीकरोमि भुवनं बधिरीकरोमि

धीरं सचेतन मचेनतां नयामि ।

कृत्यं न पश्यति नयेन हितं श्रुणोति

धीमानधीतमपि न प्रति सन्दधाति ॥

इत्येवंविधस्तत्प्रतापः । अयं क्रोधः हिंसा मुवाच यथा— "प्रिये, तावत्त्वया सहधर्मचारिण्या मातृपितृवधोपि ममेषत्कर एव । तथाहि

केयं माता पिशाची क इव हि जनको भ्रातरः

केत्र कीटाः ।

वध्योयं बन्धुवर्गः कुटिलविटसुहृच्चेष्टिता ज्ञातयोऽमी ।

आगर्भं याव देषां कुलमिद मखिलं नैरनिश्शेषयामि

स्फूर्जन्तः क्रोधवह्ने र्न दधति विरतिं ता मदङ्गस्फु

लिङ्गाः ॥"

हिंसासहायस्य क्रोधस्येदं विजृम्भण मिति ज्ञायते ।

नाटकेस्मिन् श्रद्धा त्रिविधा प्रदर्शिता- यथा— सात्विकी, राजसी, तामसीति । तृतीयेङ्के भिक्षुरित्थं वदति ।

"भो ! भो ! उपासका भिक्षवश्च, श्रूयतां भगवतः सुगतस्य वाक्यामृतम् । (पुस्तकं वाचयति) पश्याम्यहं दिव्येन चक्षुषा लोकानां सुगतिं दुर्गतिं च क्षणिकास्सर्वे संस्काराः । नास्त्यात्मास्थायी । तस्मात् भिक्षुषु दारानाक्रमत्सु नेर्षितव्यम् । चित्तमलं हि तत् यदीर्ष्या नाम ।" इति । ततः श्रद्धामाहूय "उपासकान् भिक्षूंश्च चिरमालिंग्य स्थीयता" मित्याज्ञापयति । अत्रेयं श्रद्धा तामसी ग्राह्या । एतैर्भिक्षु वचनैर्ज्ञायते ऐतिहासिको विशेषः यस्तत्कालीन बौद्धदुर्गतिं ज्ञापयति । आत्मनस्त्वनित्यत्वं शरीरस्य नित्यत्वं च तेषां मते यदस्ति तदितरै रङ्गीकार्यं वा न वा भवतु । न तेन हानिर्यस्यकस्कापि भवति । किन्तु – "भिक्षुषु दारानाक्रमत्सुनेर्षितव्य" मिति यदुक्तं तेन भिक्षूणां पतनावस्था ज्ञायते था च गर्हणीयैव सर्वैर्भिन्नसिद्धान्तानुयायिभिरिति नात्र विप्रतिपत्ति रिति मन्ये ।

कापालिकरूप धारिणीं श्रद्धामित्थं करुणा विवृणोति रजस स्सुनेति—

त्रिस्पष्टनीलोत्पललोल लोचना
नरास्थिमालाकृत चारु भूषणा ।

नितम्बपीनस्तन भारमन्थरा
विभातिपूर्णेन्दुमुखी विलासिनी ॥ इति ।

सात्विकी श्रद्धा तु–

"नास्ति जले नास्ति स्थले नास्ति गिरिगह्वरेषु नास्ति पाताले ।
साविष्णुभक्त्या सहिता निवसति हृदये महात्मनाम् ॥"

अथनाटकेऽस्मिन् सूक्तिरूपेण जगतो याथार्थ्यं प्रकटितं दृश्यते । तैर्थिका उदाहरन्तीति द्वितीयेङ्के दम्भस्तीर्थफलमित्थं विवृणोति ।

"यस्य पादौच हस्तौ च मनश्चैव सुसंयुतम् ।
विद्या तपश्च तीर्थं च स तीर्थफल मश्नुते ॥ इति ।

काश्यां संयतेन्द्रियाणामेव तीर्थफलप्राप्तिर्नान्येषामिति व्याख्याने दृश्यते । अपिचास्यां चन्द्रिकाव्याख्यायामित्थं विवृतम्— कृच्छ्र-चान्द्रायणादितपांस्युक्त्वा – अद्भिर्गात्राणि शुद्ध्यन्ति मनस्सत्येन शुद्धति विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति । तच्च ज्ञानं भवेत्पुंसां सम्यक्काशीनिषेवणात् । काशीनिषेवणात्तस्मात् विश्वेशो करुणोदयः । ततो महोदयावाप्तिः कर्मनिर्मूलनक्षमा । इत्यादि तथैव

प्रतिग्रहादुपावृत्त स्सन्तुष्टो येन केनचित् ।
अहङ्कारविमुक्तश्च सतीर्थफलमश्नुते ॥

अदाम्भिको निरालम्बो लघ्वाहारो जितेन्द्रिय ।
विमुक्तस्सर्वसङ्गैर्यस्सतीर्थफलमश्नुते ॥
अकोपनोमलमतिः सत्यवादीदृढव्रतः ।
आत्मोपमश्च भूतेषु सतीर्थ फलमश्नुते ॥ इत्याद्युदाहृतम्

एव मेव तत्वावबोध इत्थं कृतः

अस्तङ्गतेषु तनयेषु विलीनमोहे
वैराग्यभाजि मनसि प्रशमं प्रपन्ने ।
क्लेशेषु पञ्चसु गतेषु समं समीहाम्
तत्वाव बोधमथितः पुरुषस्तनोति ॥

तनयेषु कामादिष्वस्तङ्गतेषु सत्सु विलीनमोहत्वेन वैराग्यभाजिमनसि प्रसन्नतां प्राप्ते सति पञ्चसु क्लेशेषु समां समीहां च गतेषु पुरुषोऽभित स्तत्वावबोधं तनोतीतितात्पर्यम् ।

**पञ्चक्लेशा नाम** — 1 अविद्या (मिथ्याज्ञानम् ) 2 अस्मिता (बुद्ध्यात्मनो रैक्याध्यासः) 3 रागः (विषयेच्छा) 4 द्वेषः (ससाधने दुःखे अप्रीतिः) 5 अभिनिवेशश्च (मरणाद्भयं) इदमेव गीताया मुक्तम् । यथा —

"यो न हृष्यति न द्वेष्टि न शोचति न कांक्षती"ति ।

"अग्नेश्शेषं ऋणच्छेषं शत्रोश्शेषं न शेषयेद्"इति या सूक्ति र्लोके

प्रथिता सोच मत्र पूर्वपादेनैकेन संयुक्ता दृश्यते। तस्याः पूर्वं पाद एव मस्ति — "अनादरपरो विद्वानीहमानः स्थिरां श्रिय" मिति। स्थिरां श्रियमीहमानो विद्वान् अग्न्यादि शेषनिवारणं अनादरवान्नभवे दिति अत्र तात्पर्य मवगन्तव्यम्।

एकमेवाद्वितीयं ब्रह्मेति सिद्धान्त एवं विवृतः —

एकमेव सदा ब्रह्म सत्यमन्यद्विकल्पितम्।
को मोह स्तत्र कः शोकः एकत्वमनुपश्यतः॥ इति

तत्वदर्शनम्। अपत्यव्यसनखिन्नस्य मनसः प्रबोधनाय भगवत्या विष्णु भक्त्या प्रेरिता सरस्वती यतति। तत्सन्दर्भे चिन्ता न कार्येति सा वदति।

अकाण्डपातजातानां मार्द्राणां मर्मभेदिनाम्।
गाढशोक प्रहाराणा मचिन्तैव महौषध॥ मिति।

इयं सूक्तिः अनिर्वेदः श्रियोमूल मनिर्वेदः परं सुख मित्यादि वाल्मीकि सूक्तिं सुन्दरकाण्डे हनुमन्मुखोद्गतां ज्ञापयति।

सरस्वत्याप्युक्तं यथा — "ननूपदिष्टपूर्व मेवात्र मुनिभि" रिति। ममतावासनानिबन्धनं मोहं विवृण्वती सरस्वतीत्थं कथयति —

मार्जारभक्षिते दुःखं यादृशे गृहकुक्कुटे।
न तादृङ्ममता शून्ये कलविङ्कथ मूषके॥ इति।

तत्सर्वानर्थबीजस्य ममेत्वस्य उच्छेदे यत्न: कर्तव्य इति च। भिन्नप्रवृत्ती नामनेकागमानामप्यैक्यमेव प्रबोधित मत्र ज्ञातव्यं मन्तव्यं च दृश्यते।

"समानान्वयजातानां परस्परविरोधिनाम् ।
परैः प्रत्यभिभूतानां प्रसूते सङ्गतिः श्रियम् ॥

येन वेदप्रसूतानां तेषा मवान्तरविरोधेपि वेद संरक्षणाय नास्तिकपक्ष प्रतिक्षेपणाय शास्त्राणां साहित्यमेव । आगमानां च तत्वं विचारयता-मविरोधएव ।" इत्यदि वाक्यैः ज्ञानोदयं कारयित्वा अधुनातने काले "इत्थं वर्तितव्य मस्माभि"रिति एष उपदेशतुल्यः प्रतिभाति । दुरव-गाह महाविषयाणामस्मिन्नाटके सुलभतरो मार्ग अवगाहनाय कृतः परि दृश्यते कथा सन्निवेश कल्पनारूपेण सम्भाषण चातुर्या च । तथापि कालो यं दुरतिक्रमः ।

चतुर्थेङ्के राजा अनादे रादिकेशवस्य विष्णो रायतनं गत्वा तत्र भगवन्तं स्तौति । दण्डकरूपेस्तोत्रेऽस्मिन् कूर्म, वराह, नृसिंह, बुद्ध, वामन, बलभद्राद्यवताराः उक्ता दृश्यन्ते । नाटकान्तरापेक्षया स्तुति रियं दण्डकरूपा विशिष्टा भासते । नाटकान्ते भरत वाक्यात् पूर्वं पुरुष इत्थं वदति – येन साधितः प्रयत्न इति ज्ञायते ।

"प्रशान्ताराति रगमत् त्रिवेकः कृतकृत्यताम् ।
नीरजस्के सदानन्दे पदे चाहं निवेशितः ॥" इति ।

॥ इतिशम् ॥

# ११. गुप्तपाशुपतम्

आन्ध्रदेशीयः कविसम्राट् कलाप्रपूर्णः श्रीविश्वनाथ सत्यनारायणः द्वे संस्कृतनाटके व्यरचयत् । तेष्वेकं 'गुप्तपाशुपतम्' नाम भारत कथासम्बन्धि । द्वितीयं च भारतकथावस्तुकमेव 'अमृतशर्मिष्ठ' मिति । आदौ वय मत्र गुप्तपाशुपतं परिशीलयामः ।

अत्र पाशुपतं नामास्त्रं यदर्जुनेन प्राप्त मीश्वरानुग्रहेण तस्याः-प्रयुक्तत्वमेव व्यक्तीकृतम् । वस्तुतस्तु पाशुपत मर्जुनेन नैव प्रयुक्त भारतयुद्धे इत्येदमस्माभि र्ज्ञातपूर्वमेव । अस्मिन् यद्रहस्यं गुप्त मस्ति तस्याविष्करण मेव कविनाऽत्रोद्दिष्टम् । तद्व्यक्तीकरणार्थमेवरचनेयं कृता च तेन भावुकेन । पाशुपत मर्जुनेन गुप्त मेव रक्षित मस्तीत्यस्य विषयस्य व्यक्तीकरण विधानेन रचितत्वादस्य नाटकस्येदं नाम समुचितं भवति। ग्रन्थादौ भूमिकायां कविरित्थं स्वहृदयं प्रकटयति —"युगान्त-प्रलयकृतौ दत्तमतिभ्यां शिवकेशवाभ्यां अर्जुन साहाय्येन पाण्डव पक्षावलम्बनेन निर्धारितो महाध्वनि" महाभारते निक्षिप्त इति । पुनश्च "इदं पुनर्नाटकं देव मनुष्यलोकयो र्बिम्बप्रतिबिम्ब भावसमर्थनकारी"ति "नान्द्या मिदं सूचित" मित्यकथयत् । अपि च कविः कथयति अर्जुनो महावीरः । अश्वत्थामापि तथा । एकस्मिन् विषये अर्जुनश्शिवस्य प्रतिरूपः । अन्यस्मिन् विषये अश्वत्थामा । इति । इत्यादिवाक्यैः

कविः स्वदृष्टं भारतरहस्यं भावयित्वा पवित्रेण दैव मानव भावसम्पर्क विवरणेन देवमानुष लोकयोः परस्पर प्रियं भावुकत्वं विवृण्वन् तदनुकूलकल्पनाभिर्नाटक मिद मरचयत् ।

नाटकमिदं दशाङ्क परिमितं भासते । कौरव पाण्डव पक्षाभ्यां यदा युद्धायैव निश्चितं ततः अस्मिन् कथाक्रम आरभ्यते । प्रस्तावनानन्तरं प्रथमाङ्के प्रथमतः धर्मराजेनेत्थं भणितम् ।

यथा—वंशोविनाश मुपयातु सहस्रलक्षाः
गच्छन्तु नाश मतिदीन जना श्चमूगाः ।
नाम प्रहासपरि भाजनता मुपैतु
युद्धप्रिया बत ! भवन्ति नृपा धरित्र्याम् ॥ इति ।

इत्थं युद्धोन्मुखं नाटकमारब्धम् । युद्ध मेवात्र कथावस्तु दृश्यते । किन्तु वस्तुनानेन तत्र तत्र भारत कथारहस्यस्योद्घाटनं कृतं कविना तन्निबद्धपात्राणां सम्भाषण सन्दर्भेषु ।

नाटकेऽस्मिन् "बालाकी"ति पात्र मेकं कल्पितम् । सचार्जुनस्य सेवकत्वेन कल्पितः । किन्तु स्वतन्त्रः सः । भगवतः कार्तिकेयस्य सौविदल्लकः प्रमथो नाम्ना पुष्पदन्तः । अस्मिन्नाटके (भूलोके) तस्य नाम बालाकी । बालाकिना कथा सर्वस्वं हस्तामलकप्रायं कृतम् । स एव पृथिव्याकाशयोः परस्पर बिम्ब प्रतिबिम्ब भाव प्रतीकः । यथा आधुनिके काले दर्शको दृश्यते नाटकानां तथा नाटकेऽस्मिन्

गुप्तपाशुपत नाम्नि बालाकी प्रवर्तते, प्रवर्तयति च कथागमनम् । अप्रधानमिव पात्रं बलाकी दृश्यते । किन्तु सर्वस्वनिर्वाहे कीलकभूत स्सएवेति क्रमशः कथावगमने सामाजिकै र्ज्ञायते अन्ततो मुख्यतः । इदं कवेः कल्पनाशिल्प चातुर्थं । कथा तु सर्वा भारत कथैव । अतो न विवरण मावश्यकम् । किन्त्वङ्केषु स्वीकृतानि स्थलानि भिन्नानीव भान्ति । सम्भाषणादिना ज्ञायते नाटक मिदं भारतान्तर्निहित व्यासो-द्देशरहस्यं व्यक्तीकर्तुं व्याख्याप्रायं भासत इति ।

शिवकेशवावुभावपि सम्यगालोच्य युगान्तप्रलयस्य निर्वाहं चक्रतु रिति भारतस्य तत्त्वं ज्ञातव्यम् । भारते साधारणतया कृष्णस्य विष्णोः पारम्यं दृरीदृश्यते । अतो वयं भावयामः कृष्ण-निर्वर्तित कथाकं भारत मिति । नास्ति चात्र विप्रतिपत्तिः । किन्तु तत्वावगमनेन (यदस्मिन्नाटके प्रकटितं) सत्यमिवावलोकयामः यत् कृष्णः शिवसाहाय्येनैव युगान्त प्रलयङ्करणे समुचितं पात्रं स्वीच-कारेति । विषयो य मनुस्यूतः प्रदर्शितः कविना नाटकेऽस्मिन् यथावकाशं प्रवेशिकाविष्कम्भादिषु प्रधान सन्निवेशेषु च तत्र तत्र ।

शिवपारम्य मत्र कल्पितं कविना यत्र वस्तुतो विष्णुपारम्य-मेवावगम्यते इत्याभासा पाठक भावना जगति नाटकदर्शनानन्तरं यदि जायते, यतो कुतो वा नात्राश्चर्यम् । किन्तु शिवकेशव सम्यक समन्वयएव कृतः कविनेति सत्यमेतत् । स्थितिकारक, प्रलयकारकयो-रुभयो रपि समप्राधान्य युगान्त प्रलये समञ्जसं खलु । ग्रन्थादौ स्वाभिप्राय प्रकटने श्री T. G. Mainkar महोदय एवं लिखति —

"If the epic could be called a Krishnaite poem, accepting Krishna as the highest Lord, the present play is clearly a Saivaite one since Lord Siva is accepted as the highest deity." इति । किन्तु कविनोक्तं भूमिकायां यत् — "सर्वं दैवनिर्मितं दैवचालितम् । दैवप्रवर्तितं । महाप्रलय संबन्धि कर्मकृत् महेश्वरः । तेन दत्तं पाशुपतमर्जुनाय । तादृशे महायुद्धे नरः कदाचिदपि तदस्त्रं प्रयोक्तुमपि नाभावयत् । तस्मादेव प्रीतो महेश्वरः । अतएव श्रीकृष्णेन पुनरुज्जीवित शिशुविषये निर्विकार मवालम्ब्यत ।" इत्यादि । मरणं पुनरुज्जीवनं परीक्षितः, इत्यनेनात्र शिवकेशवोभयकृत्यं प्रावर्ततेत्यवगन्तव्यम् । रहस्यमिदमत्रोद्घाटितं च । अस्मिन्विषये मह्यं (एतद्रचयित्रे) कविनैकदोक्तं यत्तेन भारतान्तर्गत मेव रहस्यं व्यक्तीकृत मनेन नाटकरूपेणेति । अप्रमाणं न किञ्चिल्लिखित मत्रेति च । ततोयं व्यासमहर्षे र्हृदयरहस्यं ध्वनिरूपेण भारतेतिहासे निक्षिप्तं कविः कुशाग्रबुद्धि र्ज्ञात्वा विवृणोतीति मया भाव्यते । विषय विवृतिमित्थं कृता मया, समालोच्य पाठकाः नाटकं सम्यगवलोकनानन्तरं स्वस्वाभिप्राय परा भवन्तु ।

कथाशा नाटके भीष्माभिमन्युद्रोणकर्णादीनां निधनकथन मभवत् । कविनिर्मित पात्रेण बालाग्निना भीष्माय यदुक्तं तस्मिन् कश्चिद्विशेषोऽवगम्यते । "सर्वमन्त्राधिदेवता शिवस्तस्य (अर्जुनस्य) हृदि तिष्ठति । युद्धे तस्य पुरो गच्छति शूलपाणिः पिनाकी । वासुदेव प्रद्युम्नौ तस्य पार्श्वयो र्वर्तेते ।

"शिवस्य जाटाटवि बद्धगङ्गया
नशक्यते वारयिंतु तदुल्बणम् ।
असंशयं पार्थपृषत्कवारिदै
रुप्लाविताः स्युः कुरुचापपण्डिताः ॥

तदा भीष्मो वदति— पुष्यदन्त ! कृष्णार्जुनौ मां नालं तुलयितुं विना सुदर्शनपाशुपताभ्या"मिति । तदा बालाकी— न तौ भवन्तं स्पृशत स्ताभ्याम् । तथा माभवतु । यः सुदर्शनेन मृत्युमाप्नोति स गच्छति वैकुण्ठम् । भवद्विषये तत् सम्भवति चेत् वसूनां संख्यापूरण लोक-पालस्य क्लेशं ददाति । पाशुपते न गतः पशुत्वं गच्छति । प्रियतम पितामहविषये न करोति तथा कपिकेतनः ।" सम्भाषणेनानेन न सुदर्शनं पाशुपतं वा प्रयुक्त मिति ज्ञायते (भाविकथाविधानेन च) किन्तु तेषा मेकत्र स्थितिः स्थितिलययो स्सहकृति मकरोदिति व्यज्यते । आदावर्जुनेनाप्युक्तम्—

अग्रतः शूलपाणिः पुमान् धूर्जटिः
पार्श्वयो श्चक्रपाणिः पुमान् केशवः ।
हृत्तटे धर्मराजो धरानायकः
अर्जुनो जेतृता प्राथमं लक्षणम् ॥ इति ।

व्यासेनाप्यर्जुनायैकदा विशदीकृतमिति ज्ञायते । "मद् बाणाना मग्र गच्छत्येकं तेजः, किमिद"मित्यर्जुनोऽपृच्छत् व्यास मेकदा तदा

व्यास उवाच "तच्छैवं तेज" इति । इत्थं शैवं तेज अग्रतो गत्वा शत्रूनवधीत् वैष्णवं तेजः पार्श्वे स्थित्वा रक्षितव्यान् ररक्षेति रहस्य मिदं शिवकेशवैक्यस्य । शैवं तेज अश्वत्थामास्त्र रूपेण गर्भस्थ पिण्डरूपं परीक्षितं जघान । ततः कृष्णतेजस्त मुज्जीवयित्वा ररक्षेत्येत द्रक्षितव्ये हन्तव्ये च तयोस्समैक्यं दृश्यते यत् प्रदर्शित मस्मिन्नाटके ।

अभिमन्योर्युद्धगमनं प्रति— गमनवार्ता श्रुत्वा सुभद्रा (या नाटकेऽस्मिन्नानीता कविना) अनिष्टमाशङ्कमाना तथ्यमिदं कथयति—

"भवतु जगदधीशः सोदरो मे मुकुन्दः
भवतु परम धन्वा मे पति स्सर्व वीरः ।
विधिलिखित मभूद्यन्मार्ष्टु मेतन्नशक्यम्
भवतु मयि कृपालुः केशवो वासुदेवः ।। इति ।

अत्र विधिलिखितं तस्याः पुत्रमरणं पौत्र संरक्षणं चेति ध्वनितं तत्त्वम् । दैवे चानुकूले पौरुषेच सति प्रारब्ध मवश्य मनुभोक्तव्य मेवेत्यस्येदं ज्ञापक मित्यवगम्यते ।

नाटकेस्मिन् कविर्युद्धारम्भे सन्तान वेणुगोपालाख्यं व्रतमकार-यत् कृष्णेन । सुभद्रार्जुनाभ्यां करणीयं तत् । न च तैः कृतम् । तदर्थं कृष्णश्चकार । येन ताभ्यां नाचरितं तेन तयोः पुत्रवियोग निवृत्ति र्नाभवत् । किन्तु तत्पुत्ररक्षणं कृतं कृष्णेनेत्येष चमत्कारी समन्वयः । "अभिमन्यु युद्धाय न प्रेषितव्यः । अथवा तस्मै अर्जुनेन पद्मव्यूह

भेदनं कृत्वा ततः पुनरागमन विधानं बोधयितव्यम् ।" इति वक्तु मनेकशः सुभद्रा अचिन्तयत्किल । किन्तु सा (वक्तुं न शशाक) न जगाद तेभ्यः । तादृशावकाशस्तया न लब्धः । इत्यनुलंघ्यता विधेरिति च सिद्धान्त अत्र सन्दर्शितः ।

जगत्पतेर्निर्लिप्तत्वं चात्र बालाकीमुखतः प्रकटितं यदा अर्जुनोपि मूर्च्छां गतः पुत्रमृति वर्ता श्रुत्वा तदा—

"त्रिलोकी जेतारं पुनरपि सुतं कर्तु मथवा
मनो दध्रे तस्मा दनुहृदयघातः समभवत् ।
जगन्नेता कृष्णः परिहरति चैतान् प्रभुतया
कुविन्दो वा प्रोता ननभिमत तन्तूनिव शुचः ॥ इति ।

अतः कृष्णस्यापि समप्राधान्यं प्रलये शिवेनेति मन्तव्यम् । न तु कृष्णप्राधान्य मपवार्य शिवस्यैव पारम्यत्र साधित मिति ।

अर्जुने कर्णस्य नागास्त्रप्रयोगरहस्यं तस्य रथस्य भूमौ निमज्जनादिकं चात्र नाटके तत्तत्संबन्धि प्रागविषयै स्समन्वयीकृत्य व्याख्यातमिति विशेषः । कर्णादिभ्योऽपि परममित्र मश्वत्थामानं कथयन् तस्मै सेनापतित्व मादौ न तेन किमर्थं दत्त मित्यस्य दुर्योधनेनेत्थमवादयत् कविः । दुर्योधन अश्वत्थामानमाह—"त्वत्तोधिको समर्थो न विद्यते । अहं तावद्विगतगुरुः । सेनापति विहीनः । भवता सेनापतिना भवितव्यम् । इयमनुकूला वेला ।

"राजा स्वतन्त्रइव भात्यापि न स्वतन्त्रः
जन्मात्त बन्धुजनधीपरिवृत्तचित्तः।
काभिः परिस्थितिभिर्गलितात्मवृत्तः
शक्नोति नो किमपि कर्तुमिह स्वतन्त्रम् ॥ इति।

अनेन लोकतन्त्रो राजतन्त्रश्च प्रकटितः। किंत्वश्वत्थाम्नः अयमभिप्रायः। "अहं जानामि मम सामर्थ्यम्। अहमनधिगतराजनीत्यादिः। सैन्यविभागकरण व्यूहनिर्माणादि रनभ्यस्ता मया। धनुर्गृहीत्वा धनंजयस्येव" निरन्तर बहुमुखशरप्रयोग कुशलतापि मम नास्ति।... अलं युद्धेनेत्यादि। अनेनास्याश्रवेतृता ज्ञायते। धनञ्जयस्यापि विषय अवगतः। विशेषेण्योऽवगन्तव्यं अत्रास्ति। अश्वत्थाम्न एवाभिप्रयोन्याय्यः। भारतकथाया स्तथा प्रवृत्तत्वात् कवेर्नैपुण्येनात्रेदं सम्भाषणं व्याख्या प्रायश्च चकासते।

यदा भीमः दुश्शासनवधसमये तं गदाघातै भिन्नबाहुं कृत्वा धरणीपतितं तं रोषेण पश्यति तदा अर्जुनः पृच्छति "किं न संहरसि त"मिति। वृकोदर एवमाह। अहं वृकोदरः। न वृकः। शवरक्तं पिबति वृकः। जीवितस्य रक्तं पिबामी"ति। अर्जुनो वदति। "काचित् स्त्री पतिव्रता भवतु माभवतुवा। पांसुलामपि परिषदि विवस्त्रां कुर्वाणः ब्रह्मघ्नः। आत्महा। स दुःशासनः मानवत्व प्रथम धर्मविघातकः। तद्रक्तपातं भवता कृतमिति जगतो महोपकारः।" इति। अस्मिन् सन्दर्भे अर्जुनमुखतः कविः सृष्टिमेवं परिशीलयति–

**जीवो जन्मपरम्परा क्रमदशा यातागतो जन्तुताम्**
**त्यक्त्वा मानवजन्म तत्र लभते ब्रह्माप्तये तद्द्विधा।**
**सोपानः प्रथमाकृतिः कलयते लज्जोदय स्तत् त्वपा**
**वस्त्राच्छादनरूपमेति जगानव्यापार कृद् देहिना ॥** इति

ईदृशाः श्लोकाः पंक्तयश्च कवेः क्रान्तदर्शितां प्रौढतां च ज्ञापयन्ति।

नाटकस्यान्ते व्यासनारदयोः प्रवेशो भवति। अस्त्रप्रयोगोप-संहारविषये अर्जुनाश्वत्थामयो र्विशेषोविवृतः। अपिच तत्तदस्त्र विशिष्टता च रहस्यविशेषाश्च ज्ञातव्या भवन्ति। "वंशरक्षणार्थं वा पाशुपतप्रयोगं कु''र्वित्युक्तः कृष्णेनार्जुन इत्थं वदति "भगवन्! कोऽहं तत्र ?

**"कथमियं मम मत्कृतियोग्यता ?**
**त्वमिह धूर्जटि रत्र जगत्प्रभू।**
**दुरुपयुक्त शिवास्त्र महाघकृत्**
**न च भवानि भवानिह मत्प्रभुः ॥** इति।

सुभद्रा प्रविश्य कृष्णं प्रति–"अग्रजात! भवत्कृपया शिशुर्जीव"तीति वदति। कृष्णस्तु "शिवानुग्रहेण चे"त्युवाच। इत्यादिभिः सन्निवेशैः सम्भाषणैश्च शिवकेशव संयुक्त लोकमत्र पश्यामः।

नाटकेऽस्मिन् भाषा प्रौढा दृश्यते। ओजोविलसिता च। शान्तिपर्यवसन्नो वीर अत्र रस इतिकवे र्वाचा च ज्ञायते। भारत-

स्यापि शान्त रसप्राधान्य मभिज्ञै र्ज्ञातपूर्वमेव खलु। तदनुकूला विशिष्टा भाषाऽत्रदृश्यते। यथा कवे रितरान्ध्रकृतिषु च दरीदृश्यते प्रत्येकलक्षणेनेति न विचित्रमेतत्। कविनानेन संस्कृतधातूना मनेकेषां क्रियारूपाणि विशिष्टानि प्रयुक्तानि। अल्पज्ञोहं न तदवगमने समग्रतः पारयामि। किन्तु भाषाभिलाषिणा मनेन नाटकेन साधनेन बहुविध प्रयोग कौशलस्यावगमने अभ्यासे चेदमुपकरोतीति मन्ये। औचित्या-नौचित्यपरिशीलकाः गुणदोष विचक्षण ज्ञानिनः पण्डिता अस्माकं विज्ञतां प्रदाश्यन्ति च। तत्र तत्र कविना भाषाया मान्ध्र जातीयता उद्देशपूर्वकं निक्षिप्तेति मन्ये। यथा सुभद्रावाक्येषु "मम शिशुः पद्मव्यूहभेदनमेव जानाति न निष्क्रमणम्। अद्य ब्रवीमि। श्वोब्रवीमि। अपरेद्युर्ब्रवीमीति चिन्तयता पित्रा नोक्तम्।" इत्यादीनीतराणि च तत्र तत्र रम्याण्येव भासन्ते आन्ध्रपाठक हृदये विशेषतः। आधुनिके काले रचितं नाटकमिदं पूर्वमहाकविकृत मिव तद्विलक्षणं च भासत इत्यत्र नास्ति सन्देहः।

— x —

# १२. अमृतशर्मिष्ठम्

ध्वनिप्रस्तारः –

नमस्तस्मै महेशाय सर्वकार्य स्वरूपिणे ।
भूतस्य वर्तमानस्य समैक्याय भविष्यतः ॥

(कविसम्राट्)

देवभाषाकाशे कालिदास भवभूती गुरुशुक्रौ भवतः । यथा वाल्मीकि स्तावप्रेरयत् तथैव तद्रचना स्तदनन्तर कविलोकं समाचकुषुः । तथा विधया प्रेरणया समुद्भूतं नाटक ममृत शर्मिष्ठम् । कालिदासस्य कण्वेन महर्षिणा "ययाते रिव शर्मिष्ठा भर्तुर्बहुमता भवे"ति या आशीः कृता तया सञ्जातया समालोचनया अमृतशर्मिष्ठ नामकं नवाङ्कं नव्यं महानाटक माविरभूत् ।

कृगाद्देवयाने रुद्धरण मारभ्य ययातेः कथा नाटकेस्मिन् शर्मिष्ठासमागमं शर्मिष्ठासन्ततिं चोक्त्वा तस्यां पुरीः चक्रवर्तिता प्राप्ति पर्यन्तं प्रचलति । कथेयं शर्मिष्ठा प्रधाना । अमृता च सा शर्मिष्ठा, तामधिकृत्य कृतोयं ग्रन्थः "अमृतशर्मिष्ठ" मिति निर्वचनम् । शाप-स्तदवसानं चास्मिन् स्तः । वस्तुतः शर्मिष्ठा एका अप्सराः । शाप-वशेन भूलोके जाता ययाति माकर्षितवती । तदवसाने स्वर्गं जगाम । अत एवावश्यं राज्ञोऽतीव प्रीतिपात्रं भवेदित्येषा समालोचना कल्पना-रूपमवाप्य नाटकं बभूव ।

अस्मिन् वैशम्पायनाख्यो सेनापति बौधायन नाम्ना राज्ञो ययाते स्सचिवो भवति। तद्द्वारा शर्मिष्ठा ययाति समागमस्सिध्यति। अरुणवल्कला जघनवल्कला चेति द्वे अन्तःपुर परिचारिके राज्ञा नमसचिवस्यच यन्नाटके तस्य प्रत्यक्षं परोक्षं च सहकारिण्यौ भवतः। महाभारते देवयानीदासीं शर्मिष्ठां शय्यासनादीन्विहाय भरतु भवानिति शुक्रेणाज्ञप्तो ययाति स्तन्नियम मुलंध्य वृद्धो बभूव। तत्पुत्रश्च पूरुः कञ्चत्कालं स्वीयं यौवन पित्रे ददौ। पिता च कञ्चित् कालं युवा भूत्वा पुनस्तस्य यौवनं तस्मै प्रति ददौ। पुत्रकृताय तदुपकार प्रत्युपकाररूपेण राजा शुक्रवाक्य मनुसृत्य पुत्राय पूरवे राज्यं च दत्तवान्। सैव कथाऽत्र शर्मिष्ठा प्राधान्य मवाप्य विस्तृता। "शर्मिष्ठेव भर्तुर्बहुमता भवे"ति शकुन्तलायै आशीःप्रदाने किं वा कण्वस्यहृदयम्? प्रश्नोयं तत्समाधानस्फूर्तिश्च नाटकस्यास्य निर्माणे प्रेरकता मापतु रितीदं हृदि कृत्वा अद्यास्मिन्नाटके या ध्वनि स्तां श्रुणुमः।

राजा ययाति श्शुक्रकन्यां कूपादुद्दधार। तदेव तयोः पाणिग्रहण मभूत्। तथानुगृह्णति राक्षसगुरुः। वृषपर्वकन्या राजपुत्री। सुन्दरी यथाप्सराः। प्रथमं निषिद्धोपि राजा न शशाक शर्मिष्ठा संलग्नमनो निवर्तयितुम्। इयं कथा गम्यते धर्मविरुद्धतया। रसदृष्ट्या, सृष्टधर्मपरिशीलनबुद्ध्या च यदि वयमालोचयामः तदावगम्यते अत्र रसध्वनिरूपो महाकथाप्रपञ्चः। यथा शकुन्तलाविषये धर्मव्यतिक्रमः प्रथमं दृष्टोप्यनालोचित बुद्ध्या, क्रमशः दुष्यन्तस्य धर्मैकपरायणत्व-

मेवावगम्यते तथैवात्रापि ययातेः रससमय भावुकता प्राधान्यं, विधे-रनुकूल प्रवर्तकत्वं, अखण्डसाम्राज्यस्य समर्हता परिपूर्णं पुत्रं पूरुं चक्रवर्तिनं कृत्वा राज्यप्रदानमित्यादिशुभान्तकथानायकत्वं च गम्यते ।

रहस्य मेतद्भावयित्वा आधुनिकान्ध्र कविसम्राट् बिरुदाङ्कितेन विश्वनाथोपाह्वयेन सत्यनारायणेन कविना व्यरचि पौराणिकीकथा शताब्देऽस्मिन् नवीननाटकतया । कविः कथयति— पुंजीभूता महा-काव्यध्वनिः यथा वाल्मीकिव्यासयो र्ग्रन्थेषु दृश्यते तथैव कालिदास भवभूत्योर"पीति । अविवृत मस्माकं भावि यस्य च भूत वर्तमानयो रपि एक एव रूपः परमेश्वरस्य"चेति । कालस्वरूपः परमेश्वरः । सैव सृष्टिः । तद्रहस्यमेव नाटक ध्वनिरहस्यमिति परिज्ञातव्यम् । अतएव नाटकेषु सर्वकथाप्रपञ्चस्य संग्रहस्वरूपं प्रथममेव सूच्यते । तद्विस्तरस्ततस्ततःक्रियते । रामायण भारतयो र्भगवद्गीतायां चायंक्रमः परिदृश्यत एव । सेयं कथाध्वनिः प्रधानतया काव्यध्वनिरिति भावयंति भावुकाः । तथैव शर्मिष्ठ ययात्योः समागमे दैवनिर्णयस्य व्यक्तीकृति रस्ति । राजाचात्र दक्षिणो नायकः । लोक धर्मप्रवृत्ति मनुसृत्य "प्रजायै गृहमेधिना"मित्यस्य वैदिकलक्षणस्य प्रकृष्ट प्राधान्य मस्ति । इदं सृष्टे स्सन्ततधारां प्रसादयति । रस समुत्पत्तिस्तु तद्भिन्ना । इमां कथामनुभूय भरतमुनिरपि रसजगन्निर्माणाय समुद्यतवानिति । ततः पूर्वं वैदिकीभावध रैव विवाहविषये प्रावर्ततेति च विचित्रेयं विशिष्ट भावना । रसजगति नायिकानायकयोः परस्पराकृष्टहृदययो स्सतोः

विभावानु भावादिचर्वितं वस्तु रसत्वमाप्नोतीत्ययं भरते नान्यैरपिचाल-ङ्कारिकै निर्णीतः प्रपञ्चितश्च ।

एक एव मनुष्यः द्विधा वर्तते । सर्वोपि पुरुषः स्वयं बाह्य-प्रवृत्तिपरत्वेनैकः तद्भिन्नो जीव अन्यः । स एव रसमयः । तद्व्यक्ती-करणमेव ययाते श्चरित्रनिर्माणे परिदृश्यते । तद्व्यक्तीकृतौ च बोधायन वैशम्पायनाख्ययो र्द्वयो रेकत्वकल्पनं सहकृतम् । रसिकचित्तवृत्ति र्ययातिः गुरुशापभयात् शर्मिष्ठा नभिमुख चित्तवृत्तिस्सन् स्वस्मिन्नेव कश्चिदन्यः पुरुषः वर्तमान इति भासमान विचरणशीलोऽभवत् । वार्ता मिमां श्रुत्वा नाटकेऽस्मिन् भरतमुनेस्तृप्ति रनवधिभूता बभूव । इत्यस्मिन् दृश्यकाव्ये रसविषय सर्वस्वं प्रथम सृष्टिरिव कल्पित मिति कविर्वदति । तस्य प्रथमरस निष्यन्दनस्य गुरु शिशवः ।
इति नान्दीमारभते ।

बिभ्रज्जाटजुटी कुटीरनिलये दत्तां सुरह्लादिनीम्
सारान्थः परिपूत लोकनिचयां देवीं निराहत्य ताम् ।
वन्यासीम्न्यति तापिताङ्गलतिकां भूभृत्सुतां तर्पयन्
पायान्निर्जरवाहिनी प्रचलितः स्कन्दात्मजन्मा प्रभुः ॥

अपिच —

क्रतुध्वंसी सन्ध्याप्रणयभर संस्पन्दि चरण
स्फुरन्नाट्यक्रीडा प्रथमरसनिष्पन्दन गुरुः ।

तपश्चान्तर्भूतिं सरसमृदुभावैः परिणताम्
समानस्कन्धारोपण कृतिकृपः पातुगिरिशः ॥

अनयो र्नान्दी श्लोकयोः कविः विश्वनाथ सत्यनारायणः स्वीय निर्माण कौशलं, इतःपूर्व प्रकटित रसध्वनिस्वरूपं च प्रकटयति (च) यथा पूर्वे कालिदासादयः कवयश्चक्रुः । 'तारकासुर संहारकारी कुमारो यस्यात्मज स्सोयं शङ्करः पातुवः' इत्याशीः । शिवः पूतलोकनिचयां स्वर्गङ्गां सुराणामानन्ददयिनीं स्वीय जटाकोटीरनिलये दत्तां निराहृत्य भूभृत्सुतां पार्वतीं तर्पयति । ईदृशः शिवः पायादित्यर्थः ।

अत्र साधारणतया देवयानीं निरादरण शर्मिष्ठापरितर्पणे ध्वन्येते । यथा शङ्करो निर्जरवाहिनी प्रचलितः तथैव ययाति रपि देवयानीभीतः । निर्जरवाहिनी प्रचलितत्वं चमत्काराधायकम् । वाहिनी नाम सेना नदी च । शिवविषये निर्जरसेना प्रचलितत्वं कुमारोत्पत्ति-कारण कृपाप्रदायक मेव । तथैव सुरनदी प्रचलितत्वम् । स्वीयप्रवृत्त्य-प्रसन्नायाः गङ्गायास्तस्य भीतिजनकत्वं द्योतयति । तथैवात्रापि ययाति विषये निर्जरसेना प्रीतिकारिणी देवयानी भयहेतुर्ययातेः । ययातिस्तु देवासुरोभयमित्रम् । यथा देवयानीशर्मिष्ठयो स्समानुरागो दक्षिण-नायकतया । शर्मिष्ठा तु विरहतप्ता राजैकमतिः । शृङ्गारदशासु चरमायाः मृतेः समीपं गता । सा च मृते रपनेतव्या । अमृता कर्तव्या । अयं रसविषयः । देवयानी तु वैदिक धर्मविषया । उभे पाल्ये एव राज्ञा धर्मात्मना । पार्वती वन्यासी म्न्यतितापिताङ्गलतिका ।

अत्र पार्वतीतपोविषय एक एव रसविषयो वैदिकविषयश्च । इत्थ मिय मुभयथा ओतप्रोता सृष्टिरहस्य विवेचना विषया कल्पनाचमत्कृतिः । शर्मिष्ठा राजोपवनसीम्नि अतितापिताङ्गलतिका । स च तस्याः शरीर मनोनिष्ठो गुणविशेषः, यश्च रसोत्पादक सामग्री सम्पादकः । ईदृशोय मत्र ध्वनि श्शब्दार्थ शक्तिमूलकः प्रकाशते नाटकारम्भ-दशाया मेवालोचनामृतत्वेन ।

नाट्यक्रीडाप्रथमरसनिष्पन्दनगुरुः शिवएव समर्थोऽत्र शर्मिष्ठा वृत्तान्तगत सर्वरहस्याविष्कृति भरणयोः । तस्मात्तस्याश्रयणं कवे रस्माकमपि नान्दीमङ्गलसमारम्भसमये । शिवः सरसमृदुभावैः परिणता मन्तर्वृत्तिं तपसा सह बिभर्ति । तस्मादेवायं देवो नाट्यक्रीडा प्रथमरसनिष्पन्दन गुरु रस्माकम् । तस्याशिषा कथा ध्वनिमयीं सुविस्तृतिमाप्नोति । प्रसङ्गेस्मिन्नादौ यत्सूचितं महाकाव्य ध्वनिरूप-तया तस्य समालोचन मनेन समन्वितं कृत्वा भावयन्तु भावुका रसप्रलुब्धधियः ।

नांद्यन्ते सूत्रधारः स्वीयं गृहकलहं प्रस्तौति यत् कथानुकूलं कथारहस्य स्फोरकंक च राजते । सः ज्येष्ठांबा मे पित्रे कुपिता गृहा न्निर्गमिष्यतीति वदति । अयं देवयानी वृत्तान्त स्फोरकः । शर्मिष्ठागतबुद्धिं धर्मलोपदृष्ट्या राजानं प्रति कुपिता देवयानी । किन्तु भविष्यद्राजा पूरुः देवयानीं मानयति । तस्या अनुग्रहमाप्तुं यतति । तथाचात्रापि सूत्रधारस्य ज्येष्ठाम्बा विद्यागुरुः । "तस्याः सहायेन विना कथमहं समर्थो भवाम्येतस्याः पूज्यपरिषदः समाराधने" इत्यस्य

सूत्रधारवाक्यस्य अर्थः समालोचनीयः। नाटकेऽस्मिन् ययाति र्न देवयानीं प्रत्यल्पां प्रीतिं दर्शयति। रसलग्न चित्तो न शर्मिष्ठा मुपेक्षितुं शक्नोति। कथानिर्माणे च वैदिकया वृत्ते लौकिक रसस्यापि सृष्टेः पुष्टेश्च समप्राधान्यं वर्तते। इत्थं कविः कवयति वयति च पटमिमं सुस्पष्टतया भाविनि कथाविस्तरे। सूत्रधारस्य ज्येष्ठाम्बा प्रयोगपरमेश्वरी। तया सुशिक्षिताः नूतने अमृतशर्मिष्ठाख्ये महानाटके प्रयोक्तार इत्यवगतिः। देवयानीस्थानं चास्मिन्नाटके तथैव प्रदर्शितं पुरोगमने।

प्रस्तावनायां वसन्तगीतिरित्थमस्ति।—

**विकसत्कुसुमान्तरपानरतो**
**अविकसत्कुसुमात्तरलग्नमनाः।**
**भसलः कुसुमोपरि यत्र चलन्**
**मृदुताडितकाच्च बिभेति पिबन्॥**

पूर्वेषां कवीना मेवायं क्षुण्णोमार्गः ययातेः कथां ध्वनयति। इयं समुपालम्भननिपुणता अभिज्ञानशाकुन्तलीय पञ्चमाङ्कारम्भोपालम्भं ज्ञापयति।

ययतिः प्रविश्य प्रथममित्थं भावयति।—

**इयं तु वैदिकीवृत्तिः प्रजार्थं वृणुते जनाः।**
**स्त्रीपुमांसौ न निर्व्याज रससङ्गम भावुकौ॥**

लोके य स्समुदाचारः प्रावर्तत प्रवर्तने च तद्भिन्न व्यवहारस्य समु-
त्पत्तिरद्य ययातिना क्रियमाणा भवती त्यवगन्तव्यम् ।

ययातिस्तु पिपासु र्भवति । कीदृशं यं पिपासा ? रससम्ब-
न्धिनी । अप्सरस्साध्याच । तस्याश्च तृप्ति र्न निर्जलात्कूपात्सम्भवति ।
अपितु तत्साधन प्राथम्यम् निर्जलकूपादेव सम्प्राप्त मित्येतद्विचित्रम् ।
अतएव निर्जलकूपे स्थिता देवयानी वरुणाय कुपिता जलाधिदेवतेव
ययाते र्भासते । इय मुपमा अथवा उत्प्रेक्षा आन्ध्रादिकविना "नन्नय"
महोदयेनापि कृता । अवगत तदौचित्य बुद्धिः कविसम्राट् गृह्णातीमां
समुचितस्थाने क्रान्तदर्शितया । कूपगतां देवयानीं दृष्ट्वा राजा
"व स्याश्चिदप्सरसः पाणिबन्ध इव दृश्यते " इति भावयते ।" अस्थि
स्सरसोयं पाणिबन्ध" इति च चमत्कर्तुं युज्यते । यत्र जलं नास्ति
तत्र कथं जलसरसत्वं पाणेः ? अस्मादेव भाविनि काले भविष्यतीति
स्फूर्तिः । अद्भुतं प्रतिभात्ययं ध्वनि स्वगमन सौभाग्यानन्तरम् ।
अप्सरो पाणिबन्ध इति भ्रान्तस्य राज्ञः यथार्थतया अनन्तरकाले
शापाभिभूताया रसमूर्तेः रप्सरस एव पाणिबन्धस्सम्प्राप्तः, यदर्थं मयं
प्रबन्ध इत्थ मारभते । "पाणिं पाणिना गृहाण यथा न स्रंसे" इति
वद ति देवयानी । इमे शब्दाः सर्वेपि ध्वनि समुत्पादका एव । कचेन
शप्ता देवयानी यथात्मानं ब्राह्मणो न परिणयतीति जानाति, राज्ञः
पाणिग्रहणेन च धर्मस्रंसो भवत्येव । सा परिज्ञानवती निर्माण कुशला
च । तस्मादित्थं वदति । राजपाणिग्रहणं यदिलब्धं विलोम विवाहाय
पित्रा नीतिप्रवर्तकेणानुमता भूत्वा कथञ्चि न्न स्रंस्ता भवेत् । अतो-

ऽस्या इयमभ्यर्थना । रज्ञा यद्यपीदं न ज्ञायते समुद्धृतैव सा । राजानं प्रति सा — "प्रजापति समा राजर्षयः नित्यमप्सरो लग्न-चित्तवृत्तयः" इति वदति । "चान्द्रमसो राजा ययाति रह" मिति तेनोक्ता "रसभरितां वापीं प्राप्तवा"निति वदति । वागियं देवयानी परिणय वांछा सूचिकापि भाविनिकाले भाव्यस्य सत्यस्य स्फूर्तिं ददाति । वाच मिम मर्थो अनुधावत्येवेति भावुकानां सुस्पष्टोयं वृत्तान्तः । इदमेव बहुमुखीनत्वं नाम ध्वनेः ।

बोधायनः कल्पनां करोति "शर्मिष्ठा आगामिन्यां पूर्णिमायां चान्द्रमसं तेजः प्रविशतीति । इयं च कल्पना चान्द्रमसं राजान माप्तु मुपकृतवती । चन्द्र प्राप्तौ मृति रावश्यकी चान्द्रमस तेजोरूपस्य राज्ञः प्राप्ति र्यदि भवति तदा अमृतत्वमेव सिध्यति । इद मेव चाभिलषितं शर्मिष्ठया ।

पूरुं प्रति पुत्रवात्सल्यं वहति नाटकेस्मिन् देवयानी । तं राजानं कर्तु मीहते च । शुक्रश्च शर्मिष्ठा मदासीं भावन्नाह—

"रसाकारं स्रष्टु दनुजपति कन्यासमभवत्
निमित्तं तद्राजा रसजलधि मज्जायितमतिः ॥" इति ।

इयं शुक्राचार्यस्य व्याख्या परिशीलनीया ।

"देवयानेन गन्तुकामाना मामीध्राणां भार्या पुत्रोत्पादन

शी.लवती कर्माङ्गश्च । तत्र रसयानवृत्तिः देवयान सब्रह्मचारिणी कल्पिता ययातिने"ति स वदति ।

अन्ते कथा शुक्रानुग्रह पात्रं भूत्वा राज्यस्य चक्रवर्तिनं प्रदाय शुभपरिणाम मवाप । इयमत्र दिङ्मात्रं ध्वनेः सूचना कृता । भावुका स्समास्वादयन्तु नाटकेस्मिन् अनुपदप्रस्तुतं ध्वनिप्रस्तारम् ।

## १३. श्री कृष्णो भगवान् स्वयम्

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थान मधर्मस्य तदात्मानं सृजाम्यहं ॥
परित्राणाय साधूनां विनाशाय च दुष्कृतां ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥

इत्यादि गीतावाक्यै रवगम्यते त्रेतायां रघुनन्दनरूपेण द्वापरेच श्रीकृष्णरूपेण भगवान् विष्णु रवततारेति । श्रीरामस्तु मानवता लक्षणस्य परां कोटिमधिरुह्य लोके मानवानामादर्श मात्मानं दर्शयामास । निरूपितवांश्च सत्यधर्मपरोजनः राममादर्श प्राप्य तथा स्वीयं च जीवितं निर्वाहयितुं शक्नोतीति । मानवस्य प्रवृत्तौ भाववैश्वर्यौ चेष्टादिषु ये गुणा अवगुणाश्च दृश्यन्ते ते श्रीरामचन्द्रेपि तत्र तत्र परिदृश्यन्ते । किन्तु रामो विग्रहवान् धर्म इति कीर्ति मवाप । अत्राधिकृतवयो स्तत्र स्थाने सत्यपि अधिकतैव सर्वदा विजय मवाप न ल्पतेति श्रीराम चरितेन वयं जनीमः । तदेव पुरुषोत्तमत्वं नाम यदनुकरणीय माराधनीयं च सर्वैः पुरुषैः सर्वदा सर्वथा च ।

श्रीकृष्णचरितं तु नानुकरण साध्यम् । कृष्णेन यदुपदिष्टं तदवगन्तव्यं मन्तव्यं तथा वर्तितव्यं चास्माभिः । महिमामये श्रीकृष्ण

जीवने बहवो भिन्न भिन्ना विशेषा दृश्यन्ते, येषां सम्यगवगाहनं कष्टतरं भवति । अतएव श्रीकृष्णस्य विष्णुत्वं शंक्यते कैश्चि दज्ञैः । गुणा अपि केचित् श्रीकृष्णे दोषतया भाव्यमानास्तस्य तत्वं ज्ञातुं बाधका भवन्ति ।

अद्यात्र परिशील्यते श्रीकृष्णस्य विष्णुत्वं भगवतो व्यासमहर्षे र्वाक्येषु । भागवते दशमस्कन्धे कृष्णावतार कथासन्दर्भे प्रथमं पश्यामः ।

श्रीकृष्ण जनना त्किञ्चित् पूर्वं मित्थं देवास्तमस्तुवन् ।

मत्स्याश्व कच्छपनृसिंह वराह हंस
राजन्य विप्रविबु धेषु कृतावतारः ।
त्वं पासि न स्त्रिभुवनं च यथाधुनेश
भारं भुवो हर यदूत्तम वन्दनं ते ॥

ततो देवकी माहुः ।

दिष्ट्याम्ब ते कुक्षिगतः परः पुमा
नंशेन साक्षात् भगवान् भवाय नः ॥
माभूद्भयं भोजपते र्मुमूर्षो
र्गोप्ता यदूनां भविता तवात्मजः ॥ इति॥

कृष्णजननम् —

निशीथे तम उद्भूते जायमाने जनार्दने ।
देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः ॥
आविरासीद्यथा प्राच्यां दिशीन्दुरि व पुष्कलः ॥

जातं बालकं वसुदेव एव मैक्षत ।

तमद्भुतं बालक मम्बु जेक्षणं
चतुर्भुजं शङ्खगदार्युदायुधम् ।
श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं
पीतांबरं सांद्रपयोद सौभगं ॥

महार्ह वैदूर्य किरीटकुण्डल
त्विषा परिष्वक्त सहस्र कुन्तलम् ।
उद्दाम कांच्यङ्गद कङ्कणादिभि
र्विरोचमानं वसुदेव ऐक्षत ॥

वसुदेवस्तुतिः —

विदितोसि भवान् साक्षात् पुरुषः प्रकृतेः परः ।
केवलानुभवानन्द स्वरूपः सर्वबुद्धिदृक् ॥
स एव स्वप्रकृत्येदं सृष्ट्वाग्रे त्रिगुणात्मकम् ।
तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे ॥

अथ देवकी महापुरुषलक्षण मात्मजं वीक्ष्यैवमुवाच ।

रूपंयत्तत्प्राहुरव्यक्तमाद्यम्
ब्रह्मज्योतिर्निर्गुणं निर्विकारम् ।

सत्ता मात्रं निर्विशेषं निरीहम्
सत्वं साक्षात् विष्णुरध्यात्मदीपः ॥

.... .... .... .... ....

सत्वं घोरादुग्रसेनात्मजान्न
स्त्राहि त्रस्तान् भृत्यवित्रासहासि ।
रूपं चेदं पौरुषध्यानधिष्ण्यम्
मा प्रत्यक्षं मांसदृशां कृषीष्ठाः ॥
जन्म ते मय्यसौ पापो माविद्यान्मधुसूदन ।
समुद्विजे भवद्धेतोः कंसादहमधीरधीः ॥
उपसंहर विश्वात्मन्नदोरूप मलौकिकम् ।
शङ्ख चक्र गदा पद्मश्रिया जुष्टं चतुर्भुजम् ॥ इति ।

ततो भगवान् मातापित्रोः पूर्वजन्म वृत्तान्त मुक्त्वा प्राग्जन्मस्मरणाय रूपमेतद्वां प्रदर्शित मिति वदन् पित्रोः सम्पश्यतो स्सद्यो बभूव प्राकृतः शिशुः । ततस्तस्यैवादेशानुसारं वासुदेव स्तं शिशुं यशोदा शयने निधाय तत्सुतामुपादाय पुनर्गृहानगात् ।

एकदा अर्भकं कृष्णं यशोदा अङ्कमारोप्य स्नेहपरिप्लुता सती प्रस्तुतं स्तनं पाययामास । ततश्च तस्य जृम्भत शिशशो मुखं ददृशे । मुखे तस्मिन् —

"खं रोदसी ज्योतिरनीकमाशाः सूर्येन्दु वह्निश्वसनाम्बुधींश्च ।
द्वीपान्नगान् तद्दहितॄर्वनानि भूतानि यानि स्थिरजङ्गमानि"

वीक्ष्य विस्मिता नेत्रे संमील्य सञ्जात वेपथु रासीत् ।

ततश्च पुनरेकदा क्रीडमाना रामाद्या गोपदारकाः कृष्णो मृदं भक्षितवा निति मात्रे न्यवेदयन् । यशोदा च तमुपालभ्य कस्मा त्वं मृदं भक्षितवान् ? कुमाराः ते अग्रजोप्येवं वदन्तीति पप्रच्छ ।

**"नाहं भक्षितवानम्ब सर्वे मिथ्याभिशंसिनः ।**

**पश्य मे मुख"** मिति क्रीडाबालको भगवान् हरिः स्वमुखं व्यादत्त । सा च तत्र "विश्वं" जगत् स्थास्नु च खं दिशः, साद्रि-द्वीपादि भूगोलं स वाय्वग्नीन्दु तारकं" ददृशे । ततश्च सा "किं स्वप्न एतदुत देवमाया किं वा मदीयो बत बुद्धिमोहः" इत्याद्य-चिन्तयत् ।

एवं भगवान् बाल्ये द्विवारं मात्रे स्वस्य विष्णुत्वमदर्शयत् । भागवते ब्रह्मस्तवादयः मृतस्य गुरुपुत्रस्य पुनरुज्जीवनादि वृत्तान्ताश्च कृष्णस्य विष्णुत्वं द्योतयन्ति । बाल्ये श्रीकृष्णस्य कालीयमर्दनादिभिः कृत्यै स्तस्य महिमा मानवातीतशक्तिमत्वं चावगते भवतः ।

एकदा ब्रह्मणः स्तवानन्तरं शुकः राजान मेव माह ।

**कृष्ण मेव मवेहित्व मात्मानं मखिलात्मनाम्**

**जगद्धिताय सोप्यत्र देही वाभाति मायया**

**वस्तुतो जानता मत्र कृष्णं स्थास्नु चरिष्णु च**

**भगवद्रूपमखिलं नान्यद्वस्त्विह किञ्चन** ॥ इति ।

कालीयमर्दन समये नागपत्न्यः भर्तुर्मोक्षेप्सवः शरणदं श्रीकृष्णं शरणं प्रपन्ना एव मूचुः ।

नमस्तुभ्यं भगवते पुरुषाय महात्मने
भूतावासाय भूताय पराय परमात्मने ।
ज्ञानविज्ञाननिधये ब्रह्मणेनन्तशक्तये ।
अगुणायाविकाराय नमस्ते प्राकृताय च
कालाय कालनाभाय कालावयव साक्षिणे ।
विश्वाय तदुपद्रष्ट्रे तत्कर्त्रे विश्वहेतवे ॥ इत्यादि स्तुरियं कृष्णस्य परमात्मतां बहुधा विवृणोति । स्थालीपुलाक न्यायेनैवात्र किञ्चिदुदाहृतम् ।

आदिपुरुषो देवः यथा मुमुक्षून् भजते तथास्मान् मात्यजेत्याहुः । मोक्षेच्छयागोप्यः श्रीकृष्णं त्यक्तुं नाशक्नुवन्निति गोपिका भक्तेर्विशेषः यः परमेश्वरत्वं श्रीकृष्णस्य व्यक्तं करोति । अपि च ता एव मगायन्

न खलु गोपिकानन्दनो भवान्
अखिलदेहिनामन्तरात्मदृक् ।
विखनसार्थितो विश्वगुप्तये
सख उदेयिवान् सात्वतां कुले ॥ इति ।

अतो गोपिका गीत मपि नन्दार्भकं परमात्मानं प्रकटयति । रुक्मिणी सन्देशस्थं श्लोक मिममवगम्य वयं च जानीमः श्रीकृष्णं भगवन्तं परात्परम् ।

यथा— यस्यांघ्रिपङ्कजरजः स्नपनं महान्तो
वांछन्त्युमापतिरिवात्मतमोपहत्यै ।
यर्ह्यम्बुजाक्ष ! नलभेय भवत्प्रसादम्
जह्यामसून् व्रतकृशान् शत जन्मभिः स्यात् ॥

श्यमन्तकोपाख्याने यदा जाम्बवता सह कृष्णस्य द्वन्द्वयुद्ध मभवत् तदा तदनन्तरं "कृष्णमुष्टिविनिष्पात निष्पिष्टाङ्गोरुबन्धनो" जाम्बवान् कृष्णमेव माह ।

जाने त्वां सर्वभूतानां प्राण ओजः सहोबलम्
विष्णुं पुराणपुरुषं प्रभविष्णु मधीश्वरम् ।
त्वं हि विश्वसृजां स्रष्टा सृज्यानामपि यच्च सत्
कालःकालयिता मीशः पर आत्मा तथात्मवान्
यस्येषदुत्कलित रोषकटाक्षमोक्षै
र्वर्त्मादिशत् क्षुभितनक्र तिमिङ्गिलोब्धिः ।
सेतुः कृतः स्वयश उज्ज्वलिताच लङ्का
रक्षः सिरांसि भुविपेतु रिषुक्षतानि ॥

इत्यादिभिर्वाक्यै र्जाम्बवान् कृष्णस्य विष्णुत्वं रामाभिन्नत्वं चाप्रकटयत् । एवं श्रीमद्भागवत महापुराणं कृष्णस्य विष्णुत्व मेव पदे पदे प्रकटयति । श्रूयते केचित् भागवत कृष्णादन्यं महाभारत कृष्णं मन्यन्त इति । नैतद्युक्त सम्यक विज्ञातं च ।

अतो वयमत्र भारत कृष्णं च परिशीलयित्वा तयोरभिन्नत्वं एक एवा द्वितीय स्स भगवानिति निश्चयज्ञानं च प्राप्तुं प्रयतामः।

महाभारते आदिपर्वाण चतुष्षष्ठितमे अध्याये ब्रह्मणो वचः श्रुत्वा शक्रादय यदा नारायण मभिलध्नं वैकुण्ठ मुपचक्रमुः तदा इद मवगम्यते यद् भगवत अवतार एव श्रीकृष्ण इति। यथा—

यस्य चक्रगदापाणिः पीतवासाः शितिप्रभः।
पद्मनाभः सुरारघ्नः पृथुवक्षां चितेक्षणः।
प्रजापति पितुर्देवः सुरनाभो महाबलः
श्रीवत्साङ्को हृषीकेशः सर्वदैवत पूजितः।
तं भुवं शोभनायेन्द्र उवाच पुरुषोत्तमम्।
अंशेनावतरेत्येवं तथेत्याह च तं हरिः॥

सभ मध्ये द्रौपद्या वसनं यदा दुश्शासनो बलात्समाक्षिप्य व्यापाक्रष्टुं प्रचक्रमे तदा द्रौपदी हरिमेव मचिन्तयत्।

गोविन्द द्वारकावासिन् कृष्ण गोपी जनप्रिय।
कौरवैः परिभूतां मां किं न जानासि केशव!
हे नाथ हे रमानाथ प्रजानाथार्तिनाशन!
कौरवार्णव मग्नां मामुद्धरस्व जनार्दन!
कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वभावन!
प्रपन्नां पाहि गोविन्द कुरुमध्येवसीदतीम्॥

एव मनुस्मृत्य सा त्रिभुवनेश्वरं कृष्णं प्ररुदत । अनेन ज्ञायते भागवत भारतयोः कृष्ण एक एवेति । द्रौपद्या सम्प्रार्थितो भगवानत्र गोपी जनप्रियः, द्वारकावासी गोविन्द एव नान्यः । ततो व्यासोक्तिरियम्—

कृष्णं च विष्णुं च हरिं नरं च
त्राणाय विक्रोशति याज्ञसेनी ।
ततस्तु धर्मोऽन्तरितो महात्मा
समावृणोद्वै विविधै स्सुवस्त्रैः ॥ इति ।

महाभारतारण्यपर्वणि एकोननवत्यधिक शततमेऽध्याये मार्कण्डेय नारायण संवादो दृश्यते । तत्कथनानन्तरं मार्कण्डेयः धर्मराजं वदति— एष ते सम्बन्धी कृष्ण एव साक्षा द्विष्णुरिति तत्रस्थाः श्लोकाः परिशीलनीयाः यैश्चिरं जीविनो मार्कण्डेयस्य कृष्णं प्रति यत्परिज्ञान-मस्ति तत् ज्ञायते तदस्माकं यथार्थ ज्ञानदायकं भवति । यथा —

एवं दृष्टं मयाराजं स्तस्मिन् प्राप्तो युगक्षये ।
आश्चर्यं भरतश्रेष्ठ सर्व धर्मभृतां वर ।
यः स देवो मयादृष्टः पुरा पद्मायतेक्षणः
स एष पुरुष व्याघ्रः सम्बन्धी ते जनार्दनः
अस्यैव वरदानाद्धि स्मृति र्न प्रजहातिमाम् ॥
दीर्घमायुश्च कौन्तेय स्वच्छन्द मरणं मम
स एष कृष्णो वार्ष्णेयः पुराणपुरुषो विभुः

आस्ते हरि रचिन्त्यात्मा क्रीडन्निव महाभुजः ।
एष धाता विधाता च संहर्ता चैव शाश्वतः ।
श्रीवत्सवक्षा गोविन्दः प्रजापति पतिः प्रभुः ।
दृष्ट्वेमं वृष्णिप्रवरं स्मृतिर्मामिय मागता ॥ इत्यादि ।

राजसूय यज्ञ सन्दर्भे युधिष्ठिर निवेशनेन नारदः श्रीकृष्णं साक्षान्नारायणं ज्ञात्वा—

साक्षात् स विबुधारिघ्नः क्षत्रे नारायणो विभुः
प्रतिज्ञां पालयं श्चेमां जातः पर पुरंजयः ।

इत्यादिना पुराब्रह्मणो भवने वृत्तां कथां सस्मार । पुण्डरीकाक्षं हरिं च मनसा सस्मार । महाबुद्धि स्स नारदः तस्थौ च सबहुमानतः । तदा युधिष्ठिरेण पृष्टो भीष्मः श्रीकृष्णं तत्रार्हनीयतमं निश्चित्य पूजये-त्युवाच । पूजितश्च श्रीकृष्णो युधिष्ठिरेण सभायां यश्चाङ्गीकृत अर्हतामग्रेसर इति सदस्यै स्सर्वैः । किन्तु तत्रागतो पांडव बान्धवः शिशुपाल श्चेदिराजः भीष्मं धर्मराजं चोपालभ्य वसुदेव मवाक्षिपत् । स एव माह धर्मराजं प्रति—

नाय मर्हति वार्ष्णेय स्तिष्ठत्स्विह महात्मसु ।
महीपतिषु कौरव्य राजवत् पार्थिवार्हणाम् ॥
नायं युक्तः समाचारः ··· ··· इत्यादि ।

कर्णद्रोणकृपादयो वसुदेवद्रुपदादयश्च महात्मान स्संत्यस्यां सभायां पूजनीया अर्हतमाः । तानुत्सृज्य कथं किमर्थं वा त्वं भीष्मवाक्यानु-

सारी श्रीकृष्णमनर्हं पूजितवानसीति पप्रच्छ युधिष्ठिरं सः, यस्तु सन्निहितोऽपि बन्धुः कृष्णस्य तस्मिन् वैरं वहत्या बाल्यात् ।

भीष्मस्तु न केवल मस्माकमर्चनीयोऽच्युतः किन्तु त्रयाणामपि लोकाना मर्चनीयो महाभुजः श्रीकृष्ण इति विवृण्वन् —

"न संबंध पुरस्कृत्य कृतार्थंवा कथंचन
अर्चामहेऽर्चितं सद्भि र्भुवि भूतसुखावह "

मित्याद्येवमकथयत् —

कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः
कृष्णस्य हि कृते विश्वमिदं भूतं चराचरं ।
एष प्रकृति रव्यक्ता कर्ता चैव सनातनः ।
परश्च सर्वभूतेभ्य स्तस्मात्पूज्यतमोऽच्युतः ॥

ततस्सहदेववचांसीत्थं प्रवृत्तानि— यथा —

केशवं केशिहन्तार मप्रमेय पराक्रमम्
पूज्यमानं मया यो वः कृष्णं न सहते नृपाः ।
सर्वेषां बलिनां मूर्ध्नि मयेदं निहितं पदम् ॥ इति ।
ततोऽपतत्पुष्पवृष्टि स्सहदेवस्य मूर्धनि ।
अदृश्यरूपा वाचश्च निश्चेरुः साधु साध्विति ॥

इत्थं प्रवृत्ते सन्निवेशे शिशुपालस्यैव मुखा दुद्गतानि वचांसि सभ्य-

गालोचनीयानि तत्त्वार्थप्रदानि च परिदृश्यते यैश्च कृष्णस्य भगवत्ता ज्ञायते विज्ञैरिति विचित्रमेतत्। यथा—

पूतनाघात पूर्वाणि कर्माण्यस्य विशेषतः।
त्वया कीर्तयता साकं भूयः प्रव्यथितं मनः॥

.... .... ....

यद्यनेन हता बाल्ये शकुनि (पूतना) श्चित्र मत्र किम्?
तौ वाश्ववृषभौ भीष्म यौन युद्धविशारदौ।

इत्यादि वृत्तान्त कथनेन परोक्षतया शिशुपालेन श्रीकृष्णस्य लोकोत्तर कार्यकरण मुक्तमेव भवति। स्वस्याल्पपरिज्ञानेन स तु कृष्णं स्त्रीघ्नं गोघ्नं च समर्थयति। विरोधिना शिशुपालेन यदुक्तं तस्मिन्नपि श्रीकृष्णस्य लोकातीत शक्तिमत्वमेव यद्व्यज्यते तेनैव चास्माभि रवगन्तव्यं भगवानेव साक्षात् श्रीकृष्ण इति। ततः शिशुपालस्य वधः कृतः श्रीकृष्णेनेति विदितमेवैतदस्माकम्।

कृष्णवाक्य मिदम् —

"अधुना वधयिष्यामि पश्यतां वो महीक्षिताम्।"
एवमुक्त्वा यदुश्रेष्ठ श्चेदिराजस्य तत क्षणात्
व्यपाहरच्छिरः क्रुद्ध श्चक्रेणामित्र कर्षणः।
ततश्चेदिपते र्देहा त्तेजोग्र्यं ददृशुर्नृपाः।
उत्पतन्तं महाराज गगनादिव भास्करम्॥

**ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतम्**
**ववन्दे तत्तदा तेजो विवेशच नराधिप !**

एवं शिशुपालदेहात्तेजः कृष्णं विवेशेत्यनेन तस्य मोक्षप्राप्ति र्बभूवेति ज्ञायते । जीवात्मनः परमात्मनि लय एवं तत्रस्थानां चक्षुर्विषयं बभूवेति चित्र मेतद्वैर भक्तेः पारम्यं शिशुपाल सदृशेषु ।

उपप्लाव्यादागतः सञ्जयः धृतराष्ट्राय कृष्णं प्रति कथयति ।—
धृतराष्ट्रः पृच्छति—

**कथं त्वं माधवं वेत्थ सर्वलोक महेश्वरम् ।**
**कथमेन न वेदाहं तन्मामाचक्ष्व सञ्जय ॥** इति ।

सञ्जयः कथयति —

**श्रुणु राजन् न ते विद्या ममविद्या महीयते**
**विद्याहीन स्तमोध्वस्तो नाभिजानासि केशवम् ।**

इत्यनेनाध्यात्मविद्यैव विद्येति तदितरा न विद्याशब्द वाच्येति च । अपिच ज्ञायते सञ्जयवाक्येभ्य भगवन्तं जनार्दनं ज्ञातुं यादृशी भक्तिः शास्त्रपरिज्ञानं चावश्यके इति । यथा—

**मायां न सेवे भद्रन्ते न वृथा धर्ममाचरे ।**
**शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ॥**

संजयोक्तिः पुनरप्येवं प्रवर्तते । कृष्णं प्रति बहुधा विविच्य व्याख्याता तत्र द्वित्राण्युदाहरणानि ।

पूरणात्सदनाच्चापि ततोसौ पुरुषोत्तमः।
असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् ।
सत्ये प्रतिष्ठितः कृष्णः सत्य मत्र प्रतिष्ठितम् ॥
... ... ... ...
विष्णुर्विक्रमणाद्देवो जयनाज्जिष्णुरुच्यते ॥

इत्यादिभिः कृष्णस्य भगवत्ताया अभिव्यक्ति र्भवत्येव। सन्धिकार्यं साधयितुं यदा श्रीकृष्णः कौरवसभामायात स्तत्र तस्य विश्वरूप प्रदर्शन मभवत्।

भगवान् श्रीकृष्णः अर्जुनायापि गीतोपदेशसन्दर्भे स्वस्य विश्वरूप मदर्शयत् ।

उत्तङ्काय (उदङ्काय) गान्धार्यैच भगवान् स्वस्वरूपं प्रदर्शयत् तथा तयो स्संशयनिवारणं चाकरोदित्येवं भगवतो विश्वरूप सन्दर्शन सन्दर्भा भारते तत्र तत्र दृश्यन्ते। अर्जुनेन निर्जितो भीष्म श्शरशय्या गतस्सन् श्रीकृष्णस्यैवानुग्रहेण धर्मराजस्य सर्वान् धर्मानुपदिदेश स्वस्यापि बाधानिवृत्तिं कृष्णकृपया समवाप्य कृष्णं परमात्मानं स्तौति। यथा—

दाहो मोहः श्रमश्चैव क्लमो ग्लानि स्तथा रुजा
तव प्रसादाद्वार्ष्णेय सद्यः प्रतिगतानि मे ॥ इति।

इत्थं बहुधा विस्तृतो महान् भगवदवतारः श्रीकृष्णरूपः सर्वतोमुख मात्मनो महिमानं भक्ताना मभक्तानां च तदा प्रकटयां चक्रे। तस्मिन्नेव काले (तत्समकालीनैः) कैश्चित् भगवतः परमेश्वरत्वं शङ्कित

तिरस्कृत मविश्वसितं चेति कथासन्दर्भाणां परिशीलनेन ज्ञायते अद्याधुनिकानामज्ञानां श्रीकृष्णस्यानवगमने किमाश्चर्यमत्रास्तीति ।

भगवद्गीतासूपनिषत्सु योगविद्यायां योगशास्त्रे तु भगवतस्तत्वं सम्यग्विज्ञै रवगम्यत एव । तस्याय मुपदेशो लभ्यते भागवताय ।

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोसि मे ॥

.... .... .... ....

देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः पर मवाप्स्य थ ॥

अपिचात्मानमेवं विवृणोति भगवान् ।

नाहं प्रकाश स्सर्वस्य योगमाया समावृतः ।
मूढोयं नाभिजानाति लोको मामजमव्ययम् ॥
अवज्ञानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भाव मजानन्तो मम भूत महेश्वरम् ॥
अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥

ईदृशं श्रीकृष्णं "परित्राणाय साधूनां विनाशायच दुष्कृतां धर्मसंस्थापनार्थाय" युगे युगे सम्भूयमानं भगवन्तं ज्ञात्वा तद्भक्तिपरमास्सन्तो वयं मुमुक्षवो भवामः । ॥ इतिशम् ॥

## १४. भ्रान्ति

(स्वीयरचना)
1946

श्रेयस्करः सत्वमहत्वपूर्णः
सम्पूर्ण सौभाग्य सुखप्रदायी ।
चित्तस्य विश्रान्तिकरः सदा नः
पायाद्गुरु भारत सम्प्रदायः ॥

(नाद्यन्ते)

सूत्रधारः - नमः सभायै । तत्र भवन्तो विद्वदग्रेसराः ! अद्य भवच्चरण निकटे नवेन नाटके नोपस्थीयतेऽस्माभिः । तत् गुणग्रहण-मेवास्मत्तः कृत्वा दोषान् परित्यजन्त्वित्यभ्यर्थ्यन्ते पूज्याः ।

(निष्क्रामति)

(ततः प्रविशतः शङ्क शास्त्री तत्पत्नी च)

शङ्कशास्त्री - अये ! समाप्तः प्रातर्विधिः । यावदहं छात्रान् @ पाठयिष्यामि । त्वयापि तावत् सज्जीक्रियतां गृहकर्म ।

पत्नी - यदाज्ञापयत्यार्यः । शिष्या अद्यापि नागताः । तस्मात् ममैका अभ्यर्थना ।

श०शा० - किमिति ? किं मया करणीयमस्ति पाकादि ?

---

@ (अध्यापयामि)

पत्नी - प्रसीदत्वार्यः । न तादृंशि भयत्करणीयानि विज्ञापयामि । कुमारी दशवर्ष वयस्का जाता । अनुरूपं वरं दृष्ट्वा प्रदातव्या खलु । तस्मिन्विषये भवदाशयं ज्ञातुकामास्मि ।

श०शा० - इन्दिराया विवाहविषये वा ? युक्तं त्वदुक्तम् । अहमपि यतिष्ये । श्रूयते पुण्यपुरे कश्चिदस्तिवर इति पठति बि०ए० परीक्षायै । इति । योग्यौ तत्पितरौ सदाचार सम्पद्विशिष्टा वित्यपि विज्ञातम् ।

पत्नी - अहो ! तर्हि प्रयते इति कथ्यताम् । किं यतिष्ये इति अन्यथा माभावयत्वार्यः । स्त्रीस्वभावतया मे इत्थं वर्तते मद्वचनम् । न आर्यो न जानीति ।

श०शा० - प्रिये ! त्वामन्तरा न मेऽत्र स्वातन्त्र्य मस्ति । उक्तं खलु कालिदासेन महाकविना

"प्रायेणगृहिणी नेत्राः कन्यार्थेषु कुटुम्बिनः" इति ।

पत्नी - न मादृश्यः पत्युरीप्सित विरुद्ध मिच्छन्ति नार्यः तेनैव खलूक्तम् ।—

"भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः" इति ।

श०शा० - तदावां योग्यवरायैव दास्यावः कन्यां । अद्यनु देशे समन्तात् प्रचलत्यांग्लविद्याध्ययनम् । आंग्लविद्यार्थिनाम साम्प्रत मतीव विद्वान् । सदाचारादिकं च न परिशील्यते । भवतु नाम । श्रूयते वरस्यास्य पितरौ योग्यौ सद्वंशजाविति च । वरश्च बि०ए० पठति किल । कथमपि कुटुम्बपोषणे

समर्थो भविष्यति। तस्मात् विमृश्य किञ्चित् तमेव सम्बन्धं निर्णीतु कामोऽस्मि।

पत्नी - यद्भवदिच्छा। (इत्यन्तर्गच्छति)

(ततस्त्रयश्छात्राः समागच्छन्ति। गुरोर्वन्दनं कृत्वा अन्तिके उपविशन्ति च।)

प्रथमः - गुरो! निन्दंत्यस्मान् सर्वे बालकाः। नास्माभि रेकोपि स्निह्यते।

श०शा० - अरे, केन हेतुना?

द्वितीयः - वय मत्र संस्कृतं पठाम इति।

तृतीयः - ते सर्वे संस्कृतद्वेषिणः। किं जानन्ति ते संस्कृतीयां संस्कृतिम्? अस्यद्वेषभाषादिकं दृष्ट्वा अस्मासु आधुनिक नागरकताया अभावात् निन्दन्ति। तेनेतौ च शोचतः। मम तु तैः स्नेहाभाव एव रोचते।

श०शा० - युक्तस्त्वदाशयः। ते सर्वे वेषाभिलाषिण एव न तेषां भाषाभिलाषः। तैश्च नकर्तव्या मैत्री तेषां चरितं तु केवलं दुष्टंविपरिणमति। ते यदि यूयं स्निह्यथ ततो युष्माकं चरितं च दुष्टं भवेत्। विद्यार्थिनो जनस्य सच्चरित मपेक्षणीयम्। तदेव तस्य भूषणम्। ततश्च विद्या। अपिच आर्यैरुक्तं - "संसर्गजा दुष्टगुणाभवन्ती"ति।

प्रथमः - कि मांग्लभाषा भाषा न भवति? तत्पाठिनां कथं वा ज्ञानं न भवति? केवलं तत्पठनमात्रेण चरित्रं वा किमर्थं दुष्टं भवेत्?

श०शा० - साप्यवश्यं भाषैव । तत्पाठिष्वपि सन्तस्सन्त्येव । न तेषु द्वेषोस्माभिः कार्यः । नास्मासु तैश्च । किन्तु सर्वासां भाषाणां मातृस्थानं संस्कृतस्यैव दीयते । तस्मात् संस्कृतविज्ञाने सर्व भाषाणां चावगतिः सुलभसाध्या ।

द्वितीयः - गुरुदेव ! संस्कृतादेवभाषा स्सर्वा जाता इति कथ्यते । कथं तत् ? किमाध्रया आंग्लया वा जाता इति |यदिवा स्वयं जाता इति कथं न वक्तव्यम् ? तत्कृपया बोधयन्तु ।

श०शा० - संस्कृतं प्राचीनतमा भाषा सर्वाभ्यः इतिहासरीत्या । अपिच श्रुणुध्वं श्रद्धया । संस्कृतभाषायां मातृशब्दः खल्वस्ति । ततः आंग्ले "मदर्" इति शब्दः संजातः । इत्यमेव पितृशब्दात् "फादर्" भ्रातृशब्दात् "ब्रदर्" स्वसृ इत्यतः "सिष्टर्" इत्यादयः आंग्ले जाताः। आंध्र भाषांयां च "श्री" शब्दात् "सिरि" वैद्यशब्दात् "वेज्जु" इत्यादयः संजाताः । संस्कृतभाषायां वयं पानीयमिति वदामः। तदेव हिन्द्यां "पानी" बभूव । एव मनेके हिद्यां परश्व इत्यतः "परसो" आदयो जाताः इतरास्वपि भाषासु सर्वथा प्रचलितान् संस्कृत शब्दान् वयं श्रुणुमः । अतएव संस्कृत भाषाया स्सम्पूर्णज्ञाने सर्वासा मध्ययते सौलभ्यं भवति ।

तृतीयः - तस्मादहं संस्कृतस्यैव समग्राध्ययने यत्नं करिष्यामि । कृपया अध्यापयन्तु गुरवः ।

प्रथमद्वितीयौ - गुरुदेव ! आवामपि संस्कृतपाठं न विसर्जयिष्यावः ।

आंग्लविद्यार्थिनो यदि न स्निह्यंत्यस्माभिः तथापि कागणना ? नाद्यास्माकं तैर्भाषणमपि रोचते ।

श०शा० - सम्यक, सम्यक । तैस्सह संभाषणा मात्रेण को वा दोषः? सम्भाषण मर्यादादिकं कर्तव्यमेव । अपिच ये तेषु गुणनिस्तेषां सकाशात् ज्ञातव्यं तद्भाषारहस्यं येदुष्टा स्तैश्च न सङ्गच्छेत ।

तृतीयः - वयमस्माकं श्लोकान् सम्यक पठित्वा मध्याह्ने पाठार्थ-मागमिष्यामः ।

श०शा० - तथैव । सम्यक पठ्यतां पाठः । (सर्वे गच्छन्ति)

॥ इति प्रथमं दृश्यम् ॥

## द्वितीयं दृश्यम्

(ततः प्रविशति दर्पणे प्रतिबिम्बं पश्यन्ती कन्या)

सुभद्रा - (प्रविश्य) पुत्रि ! किं तत् ? सर्वदा दर्पणस्यैवाग्रतः स्थिति र्न युक्ता ।— किं न पठितव्यं वाल्मीकीय मुत भारतम् ?

कन्या - (मातरं दृष्ट्वा भीता) अद्यैवागतास्मीतः । पठामि पुस्तकम् । (पुस्तकं गृहीत्वा) मातः कियत् सौशील्यं सीतायाः, या राजभवनं त्यक्त्वा पत्युः पन्थानमनुसृता ।

सुभद्रा - जाते ! तदेव खल्वस्मद्भारत नारीणां प्रशंसनीयं चरितम् । किमेकैव सीता ईदृशी ? दमयत्यरुन्धत्यादय अनेकाः सन्ति साध्व्यः । पश्य ! तत्यामेव शीलमस्माभि रनुकरणीयम् ।

शा०शा० - (प्रविश्य सम्भ्रमेण) किमद्यापीत्थमेव स्थीयते ? न त्वरा । गुरुः खलु कार्यभार शिशरसि वर्तते । त्र्यहादूर्ध्वमस्ति वैवाहिकोवासरः । किं जातयासह क्रीडस्यद्यापि ? वधूर्भाविन्य चिरेण सा ।

सुभद्रा - नहि नहि । भवन्निमित्तमेवागता । अत्रान्तरे जाता रामायणीयां कथां कथयन्ती स्थापितवती । ततोहंच पुत्रिकायैः परिचर्यं करोमि साध्वीचरितम् । तत्तथास्ताम् । आँ । किमभवत् ? निश्चितमेव किं ?

शा - किमिदानीमपि सन्देहः ? निश्चितं वैवाहिकं मुहूर्तं च । परश्व एव ! इतःपरं चास्माभिस्त्वराकार्या । गच्छ, गच्छ, अभ्यन्तरं गच्छ । सज्जीकुरु सर्वमपि । (इत्युपविशति)

(सुभद्रा अभ्यन्तरं गच्छति)

कन्या - (उपसृत्य, पितः, माता कथयति — सीतादि साध्वी चरित मस्माभिरनुकर्तव्यमिति । कथं तत् ?

शास्त्री - जाते, सुष्टु पृष्टोस्मि । अवहिता श्रुणु । त्वं खलु रामायणं पठसि । तत्रास्तिकिल सीताया स्सद्गुणादिकम् । पुराकिल सीता पति भक्त्या राजमन्दिरं त्यक्त्वा वनेऽवसत् । इत्थं यत्र यत्र सीताविषयं दृश्यते तत्र तत्र श्रद्धया अवधेयम् । तदनुसारं त्वया च वर्तितव्यं भाविनिकाले । तेन त्वमपि प्रशंस्या भविष्यसि ।

कन्या - (सलज्जा तिष्ठत्यधोमुखी)

(नेपथ्ये)

जाते, इत स्समागच्छ !

कन्या - (श्रुत्वा) इयमागतास्मि । (इत्यन्तर्गच्छति)

॥ इति द्वितीयं दृश्यम् ॥

## तृतीयं दृश्यम्

(ततः प्रविशति भर्तृगृहे रामायणं पठन्ती इन्दिरा)

रमेशः - (इन्दिरायाः पतिः) (आगत्य) किं तत्पुस्तकम् ?

इन्दिरा - (ससम्भ्रममुत्थाय पानीयमानयति । सविनयम्) इदं सीताचरितम् । कियन्महिमातिशयः साध्वीनां य एतत्पठनादवगम्यते । आर्यपुत्र! अमृतप्रायं खलु भगवतो वाल्मीकेर्वाग्वैभवम् ?

रमेशः - युक्तम् । वन्द्याः प्राचीना अस्मत्कवयः । तथापि आंग्लकवयः "शेक्स्पियर्" "टेनिसन्" आदयो यथा स्वाभाविक चित्रणमकुर्वन् न तादृक दृश्यते अस्मत्कविषु ।

इन्दिरा - अहंत्वल्पज्ञा आंग्लानभिज्ञाच । मह्यंत्वेतदेवाश्चर्यकरं भवति । किन्तु मदीय आशयः – आंग्लेयात् सम्प्रदायात् भारतीयतायां सर्वथा पवित्रता महदौत्कृष्ट्यं च स्त इति ।

रमेशः - त्वं त्वेतावज्जानासि । अस्मद्वृद्धाश्च एतावदेव बोधयन्ति बालानाम् । नेतोऽधिकं तेऽपि जानन्ति । अद्य नैत चेत् मातृगृहम् । इदं तु पत्युर्गृहं ते । मदीयमभ्यासादिकं ज्ञात्वा मदनुवर्तनशीला भवेः । न त्वयि प्राचीनतां पश्येयमहं केवलम् । न च पुरातनी लज्जा । अनुपयुक्तं विनयम् । अस्वातन्त्र्य प्रकटनं मुखे । एतान्यति हीना न्यस्मादृशा मद्यतने काले ।

इन्दिरा : पुरुषाणां तु भवत्कथितं सर्व मावश्यकमेव । परन्तु स्त्रियः स्वातन्त्र्यमवलम्ब्य वा किं कुर्वन्ति । स्त्री यदि पुमानिव सञ्चरति तदा तस्या सौशील्यं कुतः ?

रमेशः - किं स्त्री नार्हति स्वातन्त्र्यम् ? एतदेवानभिज्ञाता भवतीनां । स्त्री सर्वथा भर्तृसममधिकारमर्हति । त्वमितः परं मदिच्छानुसरं कुरु । तत्र यदस्ति रामणीयकं तदवगमिष्यति ।

इन्दिरा - किं तत् ?

रमेशः - ग्रन्थालयं मयासह गन्तव्यम् । सायं वयं सर्वे कन्दुकादिकं क्रीडामः । तत्र त्वं यद्यागत्य पश्येः ततो ज्ञास्यसि कुत्र वाऽस्ति सौख्यमित्येतत् । अपि च भवद्वेष इत्थं न भवेत् । यथा वृद्धा वर्तन्ते न तथा युवत्या भवत्या वर्तितव्यम् । मदीयाः सुहृद स्सर्वे मामुपहसेयुः यदीत्थं त्वं वर्तेः । तदवश्यं मदाज्ञानुसारं कर्तव्य मेव ते ।

इन्दिरा - भवदाज्ञात्ववश्यं पालनीया। किन्तु गृहं त्यक्त्वा किमर्थं मे बहिर्गमन मिति शोचे।

रमेशः - इन्दिरे! किं न श्रूयते मद्वाक्यम्? किं मां नावदधासि? श्रृणु। अवश्यं कर्तव्य मेतत्ते।

इन्दिरा - (भीता) यदि भवतः कष्टं भवेत् ततः कथमहं मित्थं वर्ते? अवश्यं भवदाज्ञा शिरसि धार्यते।

रमेशः - पश्य! त्वयैव ज्ञास्यते सर्वम्। गच्छ! पठनालयं गच्छावः।
(इति गच्छति)
(पृष्ठतः इन्दिरा भीता मन्दं मन्दं निष्क्रमति)

इति तृतीयं दृश्यम्

## चतुर्थं दृश्यम्

(ततः प्रविशत्यासने उपविष्टो रमेशः)

उमेशः - (प्रविश्य) रमेश! सुप्रभातम्

रमेशः - अहो! सुप्रभातम्।

इन्दिरा - (प्रविश्य) नमस्ते

उमेशः - इन्दिरा देवि! नमस्ते

रमेशः - उपविशोपविश!

(स उपविष्टः)

(ततो द्वेमित्रे समागच्छतः)

रमेशः, इन्दिराच - (उत्थाय) स्वागतं युवाभ्यां । आगच्छतम् ।

गोपालः - (तयोरेकः) किं यूयमद्यापि क्रीडाङ्गणं नागच्छता किमल्पा-
हारादिक मस्ति किंचित् कर्तव्यम् ?

रमेशः - नहि नहि । वयमप्यागन्तुकामाएव । सर्वं समाप्तम् भवते
एव निरीक्षणं क्रियते ।

केशवः - (द्वितीयः) तत् उत्तिष्ठन्तु

रमेशः - अस्माकमद्य पठनालयात् शीघ्रं क्रीडाङ्गणं गत्वा ततश्च
क्रीडानन्तरं चलनचित्रं गन्तुं शीघ्रमागन्तव्यम् ।

केशवः - अवश्यम् । दर्शनीयं चित्र मद्य प्रचलति ।

रमेशः - किमिन्दिरे ! भवदाशयः कः ?

इन्दिरा - गन्तव्यमेव । पाचकस्याज्ञा दत्ता मयाशीघ्रमस्माक मागमना
त्पूर्वमेव पाको निर्वर्तितव्य इति ।

रमेशः - सम्यक, सम्यक । किं गच्छामः ।

केशवः - आगच्छत (इति सर्वे निष्क्रान्ताः)

॥ इति चतुर्थं दृश्यम् ॥

## पञ्चमम् दृश्यम्

(अस्वस्थो रमेशः शय्यामधिवसति)

रमेशः - अद्य शिरसिबाधा ववृधेऽधिकम् । चिरादस्वस्थोस्मि नाद्यापि कुशलता । अरे ! बालक ! पानीय मानय ।

बालकः - (सेवकः) (पानीयेन सह प्रविश्य) इदं पानीयम् (इत्यर्पयति)

रमेशः - इंदिरा कुत्र ?

बालकः - आर्या पठनालयं गता । इत्थं गच्छन्त्या तयाह मुक्तः यद् बालक ! अहं ग्रन्थालयं गच्छामि । ततः क्रीडाङ्गणामपि गन्तव्यमस्ति । तस्मात् त्वं भुक्त्वा संविश ! मदागमने चालस्यं भविष्यति । ततोऽहं त्वामाकारयिष्यामि कवाट मुद्घाटयितु मिति ।

रमेशः - अहो ! ममेय मवस्था । तस्याश्च क्रीडा । गच्छ, त्वं गच्छान्तः । (बाधां नाटयति)

(सेवको निष्क्रान्तः)

इन्दिरा - (प्रविश्य) (स्वांशोभां पश्यन्ती इतस्ततो भ्राम्यति)

रमेशः - का त्वं ? (विमृश्य) इन्दिरे ! एतावत्पर्यन्तं किं करोषि ? कुत्रासि ? सायं भूत्वा कियद्वेला ?

इन्दिरा - अद्य चन्द्रिका वर्तते खलु । तस्मात् क्रीडन्ती स्थिता तत्रैव ।

रमेशः - ईदृशं मां त्यक्त्वा गतवतीन्दिरे !

इन्दिरा - वेलातिक्रामतीति गतवती । यदि नाह मगच्छं ततः कथं तत्र निर्वाहः ?

रमेशः - तवेदृशी प्रवृत्तिश्चिंतां मे जनयति । अवश्यं गन्तव्यमेव ते । तथापि समयोपि विचार्यः । पश्य! अस्वस्थोऽस्मि । किमतः परं कथयामि ? (किंचित् स्मित्वा) (सम्यगालोच्य) स्वयं प्रथम मह मेव त ईदृक्प्रवृत्ते रध्यापकः । किन्तु मयाऽद्य ज्ञायते यद् अनुपमं सुखं त्यक्त्वा भ्रान्तं मया । ज्ञातमद्य न तत्रास्ति लेशोपि सुखस्येति । एतत्सर्वं मे भ्रान्तिरेव । भ्रान्तोहं भ्रान्तः । (किंचिदिवालोच्य पुनः)

अथाहं ते मदाशयं कथयामि । पुनस्ते भारतीयतां द्रष्टुकामोस्मि । आशाप्यस्ति यथापूर्वं त्वमद्यापि मदाज्ञां— नहि नहि, अद्य मम विज्ञप्तिं पालयिष्यतीति कस्तवाशयः ? विनैतेन चिन्तनेन न ममाधिको रोगोपि ।

इन्दिरा - (किंचिच्चिन्तयन्ती तिष्ठति)

रमेशः - इन्दिरे! न वचो ददासि !

इन्दिरा - (सलज्जा चकिता) यद्येतत्सर्वं भवते न रोचते ततो न ममापि । किन्तु एव क्रीडनादिकं प्रत्यभ्यस्तास्मि तत् मनसो विश्रान्तये ततो गता । यद्येतदपि ते न युक्तं कदापि नाहं बहिर्गमिष्यामि । भवन्मित्राण्यपिच नात्रागच्छेयुः । तत्र भवानपि कार्यालयात् गृहमागत्य सुखं शिष्टतरं वर्तेतेत्येतन्मे रोचते । एतद् बोधनार्थमेव यतन्ती स्वय मार्ये कदाचा

अनुभवी भविष्यतीत्यहं निरीक्षितवत्यस्मि । अद्य मच्चित्तस्यापि शान्ति स्संजाता । (इत्युपसृत्य भर्तृःपादांतिके तिष्ठति)

रमेशः - तुष्टोऽस्मि । अद्यावधि मयि पाश्चात्यवासनायाः भारतीयो भवामीतः परम् । (अन्योन्य मवलोकयतः)

॥ इति पञ्चमं दृश्यम् ॥

## षष्ठं दृश्यम्

(शुद्धवेषः पूजां कुर्वन् रमेशः । इन्दिरा प्रयच्छति पानीयम् )
(अन्तर्गत्वा ग्रन्थमानयति च)

रमेशः - (पूजां समाप्यान्तर्गत्वा पुनः प्रविशति) कः स ग्रन्थः ?

इन्दिरा - अभिज्ञानशाकुन्तलाख्यं नाटकं कविकुलतिलकस्य कालिदासस्य ।

रमेशः - अहो ! श्रूयते "शेकस्पियर" सदृशः कालिदास इति । पठ ! किञ्चित् श्रुणोमि कथं तदिति ।

इन्दिरा - न तथा । कालिदास सदृश एव स इति कथ्यताम् अस्योपमासौभाग्यं आंग्लकवेः साध्यं वा कथमिति !

रमेशः - कथं न स्यात् ? सोपि महाकविः ।

इन्दिरा - अस्तुनाम ।

रमेशः - तत्तथास्ताम् । श्रुणोमि किंचित्पठ ! ज्ञायते तस्य कविता तव रसिकता च ।

इन्दिरा - (सप्रणय रोषा) (किञ्चित्पाठभेदं कल्पयित्वा)

क्व भवान् क्व परोक्षमन्मथा ।
मृगशावैः सममेधिताप्यहम् ?

रमेशः - परिहास विजल्पितं सखि !
परमार्थेन न गृह्यतां वचः ॥

(इति ग्रन्थमाकृष्य – उभौ पठतः)

प्रवर्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतिमहत्यां महीयसाम् ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगत शक्ति रात्मभूः ॥

(यवनिका

॥ समाप्तम् ॥

पञ्चाक्षरी प्रेस्, ब्राडीपेट, गुण्टूरु.